उभौ सत्वाधिकारौ तौ त्रायेते महतो भयात् ।
अति धर्माद्बलं मन्ये बलाद्धर्मः प्रवर्तते ॥ ५
बले प्रतिष्ठितो धर्मो धरण्यामिव जङ्गमः ।
धूमो वायोरिव वशं बलं धर्मोऽनुवर्तते ॥ ६
अनीश्वरे बलं धर्मो द्रुमं वल्लीव संश्रिता ।
वश्यो बलवतां धर्मः सुखं भोगवतामिव ।
नास्त्यसाध्यं बलवतां सर्वं बलवतां शुचि ॥ ७
दुराचारः क्षीणबलः परिमाणं नियच्छति ।
अथ तस्मादुद्विजते सर्वो लोको वृकादिव ॥ ८
अपध्वस्तो ह्यवमतो दुःखं जीवति जीवितम् ।
जीवितं यदवक्षिप्तं यथैव मरणं तथा ॥ ९
यदेनमाहुः पापेन चारित्रेण विनिक्षतम् ।
स भृशं तप्यतेऽनेन वाक्शल्येन परिक्षतः ॥ १०
अत्रैतदाहुराचार्याः पापस्य परिमोक्षणे ।

C. 12. 4846
B. 12. 134. 12
K. 12. 134. 12

5 Dn3 om. (hapl.) $5^{ab}$. — $^{a}$) K5 Dn1 D2. 3. 5. 8 उभौ सत्वाधिकारस्थौ; Da D1 °कावेतौ. — $^{b}$) K1 त्रायेत; K4 B1 D4 G1. 2 M1. 2 त्रायते; V1 Bo. 2–5 Da Dn1 त्रायतो; D1 M4 त्रयैते (for त्रायेते). — $^{c}$) D4 इति; M2 अपि (for अति). D1 धर्मं (for धर्माद्). — $^{d}$) M2 बलं धर्मात् (for बलाद्धर्मः).

6 $^{a}$) K1 Da D1 बल- (for बले). K4 प्रतिष्ठतो; G1 च प्रथितो. T2 राजा (for धर्मो). K3 बलं प्रतिष्ठा धर्मस्य. — V1 reads $6^{b}$–$7^{b}$ on marg. — $^{b}$) K3 धरायाम् (for धरण्याम्). K3. 5 V1 B Da Dn1. n3 D2–5. 8. 9 जंगमं; D1 जंगमाः. — $^{c}$) K3–5 V1 B Da Dn1. n3 D3. 5. 8 वशे. — $^{d}$) Dn3 नि-; G1 [ऽ]न्र (for ऽनु-).

7 V1 reads $7^{ab}$ on marg. — $^{a}$) K3 V1 D4. 9 G2 अनीश्वरो (for °श्वरे). T1 G1. 5 बले (for बलं). K1. 2. 4. 5 B Da2 Dn1. n3 D1. 5 T2 M4 अनी(K1 °न्वे)श्वरो बले (B2 m °लं) धर्मो (K5 °र्मं); Da1 D2. 3. 8 M1–3 °श्वरो बलो धर्मो. — $^{b}$) K3. 5 D2. 8 T2 द्रुमः; B1 Dn3 D5. 9 M1. 3. 4 Ca द्रुमे; D4 वृक्षं; M2 भूमौ (for द्रुमं). K3 संस्मृता; T G1. 5 संश्रितः (T2 °ताः) (for संश्रिता). ❀ Ca: अनीश्वरे लोके धर्मो बलं संश्रितः द्रुमे वल्लीवेत्यन्वयः। ❀ — $^{c}$) K2. 3 वश्ये; K5 Dn1. n3 D2–5. 8. 9 वशे (for वश्यो). B4 बलवता. — $^{d}$) D4 बलवताम्; T2 धन° (for भोग°). D5 इह (for इव). Da भोगो भगवतामपि. — $^{e}$) T1 G5 बलवता; T2 M4 बलवतः (for °वतां). — $^{f}$) K1. 4. 5 B3. 4 D1–3. 5 शुचिः; V1 B1. 5 श्रुतिः (for शुचि). K3 धर्मो बलवती श्रुतिः; D7 S (G3. 4 absent) सर्वं बलवता जितं.

8 $^{a}$) K5 D4. 7 दुराचारा (D7 °रं). D4 हीनबलः; D7 क्षीणबलं. — $^{b}$) K3–5 Da Dn1. n3 D2. 3. 5. 8 परित्राणं; M °संख्यां (for °माणं). K2. 3. 5 V1 B D (Dn2 D6 absent) S (G3. 4 absent) न गच्छति (for नियं°). — D7 om. $8^{c}$–$10^{b}$. — $^{c}$) M2 कस्माद् (for त°). — $^{d}$) K1 S (G3. 4 absent) सर्वलोको; D1 सर्वो लोके; D9 सर्वलोका (for सर्वो लोको).

9 = (var.) 12. 123. 18. D7 om. 9 (cf. v. l. 8). — $^{a}$) K1 अपधस्तो (sic). V1 ह्यपगतो; T2 [ऽ]पह्वरते; G1 [ऽ]पह्वंवते (sic); G2 ह्यवमृता (for °मतो). — $^{b}$) Da जीवितुं (for जीवितम्). G2 दुःखं जीवंति जीवति. — D1 om. $9^{c}$–$10^{b}$. — $^{c}$) K1 G2 यदविक्षिप्तं; K2. 5 Dn1. n3 D2–4. 8. 9 °पकृष्टं; K3 V1 B1. 2 Da D5 °भिक्षिप्तं; Bo. 3–5 T G1. 5 M1. 3. 4 °धिक्षिप्तं; M2 °पध्वस्तं (for °वक्षिप्तं). — $^{d}$) K1 तथैव; D4 यथेव (for यथैव). D5 शरणं (for मरणं). K1 यदा (for तथा).

10 D1. 7 om. $10^{ab}$ (cf. v. l. 9, 8). — $^{a}$) K3 यदेतम्; K5 B1 Da Dn1. n3 D2. 3. 8 यदेवम्; M1. 4 यदैनम्; M2 यद्वैनम्; M3 यद्वैवम् (for यदेनम्). D9 यमेव प्राहुः कोपेन. — $^{b}$) B4. 5 चारित्र्येण; Dn3 चरित्रेण. K1. 3 विवि(K3 विल)क्षितं; K2 विनिक्षितं; K5 V1 B Da Dn1. n3 D2. 3. 5. 8. 9 G2 विवर्जितः (V1 B2. 5 Da °तं; D9 °ताः); D4 विवक्षतः; T G1. 5 M विवक्षितं (M4 °ता) (for विनिक्षतम्). — $^{c}$) K B (except B1) Da D5 S (except G1; G3. 4 absent) सुभृशं; D7 सुभृतं (for स भृशं). K1–3 V1 B D5. 7 S (G3. 4 absent) तेन; K4. 5 नैव; Da येन; D1 lacuna (for ऽनेन). Dn1. n3 D2. 3. 8 सुभृशं ताप्यते नैव. — $^{d}$) B1 वागड्येन (sic); Dn3 बाहुल्येन; D4 वाग्जल्पेन. Da2 Dn3 D4. 7. 9 T2 M1 परि(D7 °री)क्षितः; D5 च विक्षतः; G1. 2 M2 परी° (for परि°).

11 Cf. 12. 123. 19. — $^{a}$) K3 Bo. 3–5 D4. 7 S (G3. 4 absent) तत्र (for अत्र). K3 V1 B Da D4. 5 T2 M1–3 औपम्यं (for आचार्याः). K3 (marg.) अवेति सदा रौद्रं. — $^{b}$) D4 यत्पाप-; D9 तापस्य (for पापस्य). V1 D9 परिमोक्षणात् (D9 °णं); D5 °रक्षणे (for

12. 4846
12. 134. 12
12. 134. 12

त्रयीं विद्यां निषेवेत तथोपासीत च द्विजान् ॥ ११
प्रसादयेन्मधुरया वाचाप्यथ च कर्मणा ।
महामनाश्चैव भवेद्विवहेच्च महाकुले ॥ १२
इत्यसीति वदेदेवं परेषां कीर्तयन्गुणान् ।
जपेदुदकशीलः स्यात्पेशलो नातिजल्पनः ॥ १३
ब्रह्मक्षत्रं संप्रविशेद्बहु कृत्वा सुदुष्करम् ।
उच्यमानोऽपि लोकेन बहु तत्तदचिन्तयन् ॥ १४
अपापो ह्येवमाचारः क्षिप्रं बहुमतो भवेत् ।
सुखं वित्तं च भुञ्जीत वृत्तेनैतेन गोपयेत् ।
लोके च लभते पूजां परत्र च महत्फलम् ॥ १५

इति श्रीमहाभारते शान्तिपर्वणि द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

---

°मोक्षणे). — $^{c}$) K1 Bo. 1. 3 Da2 D4. 5. 7. 9 M3 त्रयी- (for त्रयीं). K3 विद्यो (for विद्यां). K5 Dn1. n3 D2-4. 8. 9 अवेक्षेत (Dn3 °ते); T2 G1 उपासीत (for निषेवेत). — $^{d}$) V1 ततोपासीत; Dn3 तत्तथोपासि; D9 तथोपासेत (for °पासीत). K3. 5 Dn1. n3 D2. 3. 8 T2 G1 M4 वै; K4 वा (for च).

12 $12^{ab}$ = 12. 124. $22^{ab}$. D9 om. $12^{a}$-$13^{b}$. — $^{a}$) K5 Dn1. n3 D2. 3. 8 चक्षुषा च; D4 च परया (for मधुरया). D5 वादयेन्मधुरां वाचं. — $^{b}$) K2. 3 B1. 5 Da D7 वाप्यथ; K5 V1 Bo. 2-4 Dn1. n3 D2. 3. 8 S (G3. 4 absent) चाप्यथ (for [अ]प्यथ च). D5 om. च. — $^{c}$) K5 Dn1 D5. 8 चापि भवेद्; Dn3 चेद्भवेद्धि (for चैव भवेद्). — $12^{cd}$ = (var.) 12. 123. $20^{ab}$. — $^{d}$) Ś1 K3 Dn3 विवाहेच्च; K1 विवाहायेश्च (hypermetric); Bo विवहेत; D4 विवाहे च; D5 विहरेच्च (for विवहेच्च). M महाकुलैः.

13 $13^{ab}$ = (var.) 12. 123. $22^{cd}$. D9 om. $13^{ab}$ (cf. v. l. 12). — $^{a}$) D7 S (except M1; G3. 4 absent) [अ]स्मीति (for [अ]सीति). V1 Bo. 2. 5 D5 T1 G1. 2. 5 M4 वदेदेव (for °देवं). — $^{b}$) M1. 3 पूर्वेषां (for परेषां). Da Dn1 D4. 7 T G2. 5 M1. 2 कीर्तयेद् (for कीर्तयन्). — $13^{cd}$ = (var.) 12. 123. $21^{ab}$. — $^{c}$) K3 जयेद् (for जपेद्). G1 उदकशीलस्य; M2 उदारशीलः स्यात् (for उदक°). ❀ Ca: उदकशीलो नित्यस्नायी। ❀ — $^{d}$) D4 कुशलो; D7 पेशले; M2 पेशलं; Ca. b पेशलो (as in text). K3. 5 V1 B D (except D1; Dn2 D6 absent) T1 G1. 2. 5 M -जल्पकः (for -जल्पनः). T2 पेशले नाभिजल्पतः.

14 With $14^{ab}$, cf. 12. 123. $21^{cd}$. — $^{a}$) K4 संप्रविशन्; M4 °विशे (for °विशेद्). — $^{b}$) K3 D4 दंडं (for बहु). Ś1 K2. 4 D1. 8. 9 सुपुष्कलं; D7 T1 G2. 5 M4 सुदुष्कृतं; M1. 3 [अ]पि दुष्कृतं; M2 [उ]पदुष्करं (for सुदुष्करम्). — $^{c}$) Ś1 K2. 4 D1 ताप्यमानो; K1 उद्यमानो; D4. 9 G2 M उच्चमानो (for उच्यमानो). K3. 5 V1 B Da Dn1. n3 D2-5. 7. 8 T G1. 5 हि (for ऽपि). — $^{d}$) K2. 5 B4 Da Dn1. n3 D2. 3. 8. 9 बहुकृत्; K3. 4 V1 Bo-3. 5 D5 बहुत्वं (for बहु तत्). D7 T2 G1 बहुतत्त्वमचिंतयन्; M1-3 बहु तत्तन्न (M2 वित्तं न) चिंतयेत्.

15 $15^{ab}$ = 12. 123. $23^{ab}$. — $^{a}$) D9 अपापौ. D4 सुपापोप्येवमाचारः; D7 S (G3. 4 absent) उपप्राप्यै (D7 °पप्राप्यै-; M3. 4 °पाप्राप्यै )वमाचारं (M1 °रः). — $^{b}$) K1 बहुमतं. — $^{c}$) D1 सुख- (for सुखं). K1. 5 Dn3 D3. 7. 8 T2 G1 च वित्तं (by transp.); D2 च चित्रं; D4. 9 M4 च वृत्तं; T1 G5 च चित्तं; G2 च वित्तं च (hypermetric). K3 V1 B Da D5 विभज्य (B2 °भिद्य) वित्तं (K3 चित्तं) भुंजीत; M1-3 सुखं वित्तं बलं चैव. — $^{d}$) K3. 5 V1 Bo-3. 5 Da Dn1. n3 D3. 8 वित्तं (B2 D3 चित्तं; Da1 वित्तिं) नैकोनु-; B4 D5 वि(D5 चि)त्तं नैकेन; D2 वित्तेनैकोनु-; D4. 9 G2 वृत्तेनैकेन (for वृत्तेनैतेन). B2 D9 T1 G2. 5 M4 गोपयन्; M2 शोचयेत्. — After $15^{cd}$, D7 T G1. 2. 5 ins. ( = [var.] 12. 133. $6^{c}$-$7^{b}$ ):

303* अपि तेभ्यो मृगान्हत्वा नयेच्च सततं वने ।
यस्मिन्न प्रतिगृह्णन्ति दस्युभोजनशङ्कया ।

— $^{e}$) K1 लोके तु; Dn3 लोकेन; M1-3 स लोके (for लोके च). — $^{f}$) K3. 5 Da Dn1. n3 D2-4. 8 परत्रेह (for परत्र च). D1 om. च.

Colophon. — *Sub-parvan:* Ś1 K V1 Bo. 1. 3. 5 Da2 Dn1. n3 D1-5. 9 आपद्धर्मः; B2. 4 Da1 D7 S (G3. 4 absent) राजधर्मः. — *Adhy. name:* D7 T1 G1. 2. 5 M1-3 बलप्रशंसनं. — *Adhy. no.* (figures, words

# १३३

भीष्म उवाच ।

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यथा दस्युः समर्यादः प्रेत्यभावे न नश्यति ॥ १
प्रहर्ता मतिमाञ्शूरः श्रुतवाननृशंसवान् ।
रक्षन्नक्षयिणं धर्मं ब्रह्मण्यो गुरुपूजकः ॥ २
निषाद्यां क्षत्रियाज्जातः क्षत्रधर्मानुपालकः ।
कापव्यो नाम नैषादिर्दस्युत्वात्सिद्धिमाप्तवान् ॥ ३
अरण्ये सायपूर्वाह्णे मृगयूथप्रकोपिता ।
विधिज्ञो मृगजातीनां निपानानां च कोविदः ॥ ४
सर्वकाननदेशज्ञः पारियात्रचरः सदा ।
धर्मज्ञः सर्वभूतानाममोघेषुर्दृढायुधः ॥ ५
अप्यनेकशताः सेना एक एव जिगाय सः ।
स वृद्धावन्धपितरौ महारण्येऽभ्यपूजयत् ॥ ६
मधुमांसैर्मूलफलैरन्नैरुच्चावचैरपि ।

C. 11. 4858
B. 12. 135. 7
K. 12. 135. 7

---

or both): B1 124; B3.4 133; Da1 Dn1 4; D7 G1.2 M 136; D8 3; T1 G5 137; T2 135. — *Śloka no.:* K5 35; Da1 16; D9 82.

## 133

1 D5.8 om. the ref. — $^{ab}$) T1 G5 om. from इर up to पुरा. — K2 D1 om. $1^{cd}$. — $^{c}$) T2 G1 यदा (for यथा). — D7 S (G3.4 absent) om. $1^{d}$–$3^{e}$. — $^{d}$) D4 प्रेत्यभावान्. D5 च (for न). D9 पश्यति (for नश्यति).

2 D7 S (G3.4 absent) om. 2 (cf. v. l. 1). — $^{a}$) K3.5 V1 B Da Dn3 D2.3.8 प्रकृत्या; D1 प्रहन्ता (for प्रहर्ता). D5 प्रकृत्याभिमताञ्शूरः. — $^{b}$) K2 B3.4 Dn1 D3 सुनृशंसवान्; D4 अनृशंसवाक् (for °वान्). — $^{c}$) Ś1 K4 D1 अक्षयिनं; K2.5 Dn1.n3 D2.3.9 आश्रमिणां; D4 अकृपणं (for अक्षयिणं). K3 V1 B Da रक्षन्सु(B2 °स्वं)रक्षितान्सर्वान्; D5 रक्षत्सुरक्षिता सर्वान्; D8 रक्षंताश्रमिणां धर्मं. — $^{d}$) K3 ब्राह्मणेषु तु पूजकः; D5 ब्राह्मणान्गुरुपूजकान्.

3 D7 S (G3.4 absent) om. $3^{abc}$ (cf. v. l. 1). — $^{a}$) Ś1 निशाद्यां. D4 त्रितयाज् (for क्षत्रियाज्). — $^{b}$) Da2 यक्ष-; D4 सर्व- (for क्षत्र-). — $^{c}$) Ś1 K2–5 V1 B Da Dn1 D4.5.8 कायव्यो; K1 कायको; Dn3 कायेव्यो; D2 कायद्यो; D3 कपव्यो; D9 कापथ्यो (for कापव्यो). D2 वास (for नाम). Da2 om. from नैषादि up to जातीनां (in $4^{c}$). — $^{d}$) K1 D1.4 T2 G1 M2 आप्नुयात् (D4 °यान्) (for आप्तवान्).

4 Da2 om. $4^{abc}$ (cf. v. l. 3). — $^{a}$) K1.5 V1 B Dn1.n3 D2.3.8 सायं पूर्वाह्णे (K1 °ह्णं; K5 °ह्णे); K3.4 Da1 D4 सायपूर्वाह्णे. D5 सायमरण्ये पूर्वाह्णे; D9 अरण्यशायी पूर्वाह्णे. — $^{b}$) D4 -प्रकोषिता (for -प्रकोपिता). — For $4^{ab}$, D7 subst.:

304* अस्ति कापव्यस इति मृगयुधर्मकोविदः ।

— $^{c}$) K3 D4 मृगघातानां; D7 S (G3.4 absent) °यूथानां (for °जातीनां). — $^{d}$) K3 D4 वनानां च स; K4 V1 B Da निपादानां च; K5 Dn1.n3 D2.3.5.8 नैषा(Dn3 °ष)दानां च; D7.9 T1 G1.2.5 निपातानां च; M2 निधनानां च (for निपानानां च).

5 $^{a}$) B3 -कारण-; D5 -कालेन (for -कानन-). K3.5 Dn1.n3 D2–4.8 सर्वकालप्रदेशज्ञः (Dn3 °ज्ञः). — $^{b}$) K1 D4.9 M1.3 परियात्रचरः (D4 °वरः; D9 M1.3 °परः); V1 B0.4.5 पारिपात्रचरः; B1 पारिपत्रे चरः; Da1 D7 M2 पारियात्राचरः (M2 °परः). V1 तदा (for सदा). — $^{c}$) K1 धर्मज्ञ; B2.3 सर्वज्ञः; D9 कृतज्ञः (for धर्मज्ञः). K3 D4.7 S (G3.4 absent) सर्ववर्णानाम् (for °भूतानाम्). — $^{d}$) D5 T4 G5 अमोघेषु (for °घेषुर्). Dn3 गदायुधाः (for दृढायुधः).

6 $^{a}$) K2 सेनाम्. K3.5 V1 B Da Dn1.n3 D4.5.7 S (G3.4 absent) अप्यने(Dn3 °नी)कशतां (Da T2 M °तं) सेनाम्. — $^{b}$) D1 एव (for एक). K1 जगाम (for जिगाय). — $^{c}$) K1 आवृद्धावस्य पितरौ; K5 Dn1.n3 D2–4.8.9 स च वृद्धांधबधिरौ (D2 °बधिरान्); V1 B0.1.3–5 D1 स वृद्धावस्थापितरौ; Da स वृद्धमातापितरौ; D5 स वृद्धौ च स्वपितरौ; D7 T1 G5 M3.4 स वृद्धावंब(M3 °बा)पितरौ; M1 स वृद्धावंबाबाधिरौ; M2 स वृद्धावंबंधिपितरौ (sic). — $^{d}$) K1 B1 D5 G1 M4 [ऽ]भ्य(K1 °त्य)पूजयेत्; V1 D3.9 °पूजयन् (for °पूजयत्). D4 अरण्येपि प्रपूजयन्.

C. 12. 4856
B. 12. 135. 7
K. 12. 135. 7

सत्कृत्य भोजयामास सम्यक्परिचचार च ॥ ७
आरण्यकान्प्रव्रजितान्ब्राह्मणान्परिपालयन् ।
अपि तेभ्यो मृगान्हत्वा निनाय च महावने ॥ ८
ये स्म न प्रतिगृह्णन्ति दस्युभोजनशङ्कया ।
तेषामासज्य गेहेषु काल्य एव स गच्छति ॥ ९
तं बहूनि सहस्राणि ग्रामणित्वेऽभिवव्रिरे ।
निर्मर्यादानि दस्यूनां निरनुक्रोशकारिणाम् ॥ १०

दस्यव ऊचुः ।

मुहूर्तदेशकालज्ञ प्राज्ञ शीलदृढायुध ।
ग्रामणीर्भव नो मुख्यः सर्वेषामेव संमतः ॥ ११
यथा यथा वक्ष्यसि नः करिष्यामस्तथा तथा ।
पालयास्मान्यथान्यायं यथा माता यथा पिता ॥ १२

कापव्य उवाच ।

मा वधीस्त्वं स्त्रियं भीरुं मा शिशुं मा तपस्विनम् ।
नायुध्यमानो हन्तव्यो न च ग्राह्या बलात्स्त्रियः ॥ १३
सर्वथा स्त्री न हन्तव्या सर्वसत्त्वेषु युध्यता ।
नित्यं गोब्राह्मणे स्वस्ति योद्धव्यं च तदर्थतः ॥ १४
सस्यं च नापहन्तव्यं सीरविघ्नं च मा कृथाः ।

---

7 D8 om. 7[a]-8[b]. — [b]) K3 D4 अर्चैर्; V1 Dn3 D5 अन्यैर्; Bo. 4 D3 रत्नैर्; T2 G1 वन्यैर् (for अन्नैर्). T1 G2. 5 चोच्चावचैर् (for उच्चा°). — [c]) D6 सत्कृत्संभोजयामास. — [d]) K5 B4 Dn1 D2. 3 [अ]न्यान् (for सम्यक्). K3 V1 Bo. 4. 5 D4. 5. 7. 9 T G2. 5 M2 ह (for च). B2 सम्यक्च परिचारयन्; Da स (Da2 om. स) सम्यग्विचचार ह; Dn3 मान्यान्परिचराचर.

8 D3 om. 8[ab] (cf. v. l. 7). — [a]) V1 आरण्यके. — [b]) K5 V1 B Da Dn1. n3 D2. 3. 5 परिपूजयन्; D9 अभिपालयन् (for परि°). — [c]) G1 केभ्यो (for तेभ्यो). D9 गृहान्गत्वा (for मृगान्हत्वा). — [d]) K3 D9 सलिलेंधनैः (D9 °नै); Dn1 D4. 7 S (G3. 4 absent) सततं वने (for च महावने). K5 V1 B Da Dn3 D2. 3. 5. 8 निवेदयति वै वने.

9 G2 om. 9[a]-10[b]. — [a]) K5 Da1 D2. 3. 8 अस्माश्च; Bo. 4 ये न स्म; B3 ये स्वन; B5 येन सा; Da2 Dn1. n3 येऽस्मान्न; D5 येनास्मान्; D7 T2 येस्य न (for ये स्म न). K3 प्रतिगृह्णंति (for °गृह्णन्ति). — [b]) Da1 दस्युभाजन°; D6 दस्युतो जन° (for दस्युभोजन°). — [c]) K5 Dn3 D2. 3. 7. 8 G1 आसाद्य; T1 आसाज्य (for आसज्य). — [d]) K2-5 V1 B Da Dn1. n3 D2. 3. 5. 8 T2 कल्य; D4 M1. 3. 4 काल्यम्; D7 G5 (*inf. lin.* as in text) एक; M2 कल्यम् (for काल्य).

10 G2 om. 10[ab] (cf. v. l. 9). — [a]) K5 Da Dn1. n3 D2. 3. 8 बहूनि च; V1 B D5 बहूनि तं (by transp.). — [b]) V1 Bo. 2. 4. 5 Da1 Dn1 D1-3. 5. 8 T1 G5 M1. 3. 4 ग्राम( Dn1 °मा )णीत्वे; B1 ग्रामाणि तु; D9 ग्रामाणां तु (for ग्रामणित्वे). Ś1 K2 M2 हि; K1 वि°; K4 D1 ह; B2 (marg.) Dn3 D2. 3. 5. 8 न; D7 T G1. 5 च (for ऽभि°). — [c]) T2 निर्मर्यादादि; G2 निर्मदानां च (for निर्मर्यादानि). D1 om. दस्यूनां. — [d]) K5 V1 B1. 2 Da Dn1. n3 D2. 3. 7. 8 S (G3. 4 absent) निरनुक्रोशवर्तिनां (G2 °शतां गतः).

11 [a]) V1 Bo. 5 M1-3 मुहूर्तं; Da1 °र्तें (for मुहूर्त°). K2. 3. 5 V1 Bo-2 Da Dn1. n3 D2-5. 7-9 T G1. 2. 5 °कालज्ञः (for °कालज्ञ). — [b]) K3 M4 प्राज्ञः (for प्राज्ञ). K1 M1. 4 शूल°; K3 B3-5 M3 शूर (for शील°). K2. 3 °दृढायुधः. K5 V1 B1. 2 Da Dn1. n3 D2. 3. 8 प्राज्ञः शूरो दृढव्रतः; Bo D4. 5. 7. 9 T G1. 2. 5 M2 प्राज्ञः (D7 T1 G1. 2. 5 प्रज्ञा°; M2 प्राज्ञाः) शूरो (D4 M2 शूर°) दृढायुधः. — [c]) G1 ग्रामणिर्; M2 ग्रामणी (for ग्रामणीर्). — [d]) Dn1 भव (for एव). K3 संमतं; Dn3 संगतः; M1-3 सत्तम (for संमतः).

12 [a]) K5 Bo. 1. 3 Dn1 D3 वक्ष्वसि; Da2 वक्ष्यामि; M2 वक्ष्यति (for वक्ष्यसि). — [b]) Da करिष्याम. K3 V1 B1. 2 Da वयं; Bo तदा (for the first तथा). D5 om. the second तथा. — [c]) Ś1 K4 D1 T2 यथान्याय्यं. — [d]) G1 तथा (for the second यथा).

13 K1 V1 B Da Dn1. n3 D1. 5 कायव्य; K2-5 D2. 3. 8 M2 कापव्य; D7 T G1. 2. 5 दस्युः; D9 कापथ्य. — [a]) D4 om. मा. Ś1 K4 वधीढवं (sic); K1 वधी त्वं; K3 V1 B D5 वधिष्ठाः; Da बाधिष्ठाः; D9 वधीत; M1. 3 वधीध्वं (for वधीस्त्वं). G2 स्वयं (for स्त्रियं). B1 भीरुः; D4 T2 G1 भीरु; D9 भीतां; M1-3 विप्रं (for भीरुं). — [b]) K5 Dn3 D1. 3. 8 पशुं; B2 D5 शिष्टं; M2 शुचिं (for शिशुं). G1 तपस्वि च (for तपस्विनम्). — [c]) D1 वायुध्यमानो. K1 हर्तव्यो (for हन्तव्यो). — [d]) K1 चाग्राह्या; K4 वगाह्या;

पूज्यन्ते यत्र देवाश्च पितरोऽतिथयस्तथा ॥ १५
सर्वभूतेष्वपि च वै ब्राह्मणो मोक्षमर्हति ।
कार्या चापचितिस्तेषां सर्वस्वेनापि या भवेत् ॥ १६
यस्य ह्येते संप्ररुष्टा मन्त्रयन्ति पराभवम् ।
न तस्य त्रिषु लोकेषु त्राता भवति कश्चन ॥ १७
यो ब्राह्मणान्परिभवेद्विनाशं वापि रोचयेत् ।
सूर्योदय इवावश्यं ध्रुवं तस्य पराभवः ॥ १८
इहैव फलमासीनः प्रत्याकाङ्क्षति शक्तितः ।
ये ये नो न प्रदास्यन्ति तांस्तान्सेनाभियास्यति ॥ १९
शिष्ट्यर्थं विहितो दण्डो न वधार्थं विनिश्चयः ।

C. 12. 4871
B. 12. 135. 20
K. 12. 135. 20

---

M4 च ग्राह्याद् (for च ग्राह्या). D4. 9 G1 M2 न च ग्राह्याबला स्त्रियः (G1 °यं).

14 a) G1 M1. 3. 4 सर्वशः स्त्री; M2 सर्वाः स्त्रियो (for सर्वथा स्त्री). T2 M2 हंतव्याः (for हन्तव्या). — b) B1 सर्वसत्त्वेन; D1 °तत्त्वेषु (for °सत्त्वेषु). K3. 5 V1 B Da Dn1. n3 D2. 3. 8 केनचित्; D4 [अ]वध्यता; D5 सर्वदा; D7 S (G3. 4 absent) वुध्यता (G1 °त) (for युध्यता). — c) Dn3 D5. 8 तु (for गो-). K4 नास्ति; D1 स्वस्वे (for स्वस्ति). M2 नित्यं गोब्राह्मणेभ्यश्च. — d) K3 तु (for च).

15 a) B1 शस्यं; Dn1 T1 G5 सत्यं; D7 G1 M2 सेव्यं (for सस्यं). K2-4 V1 Bo-2. 4 Da Dn1 D4 9 नो (K2. 4 Dn1 D9 ना)पहर्तव्यं; K5 B3. 5 Dn3 D2. 3. 8 नापि हर्तव्यं; D1 [अ]पि न हंतव्यं; D5 T G2. 5 M नोपहंतव्यं; D7 G1 नापि हंतव्यं (for नापहन्तव्यं). — b) K2 सीघ्रं विघ्नं; K3 Dn1 (marg. as in text). n3 सारविघ्नं; B1 शीरविघ्नं; G1 सुरविघ्नं (for सीर°). Ś1 D1 कृथ; K1 कृथा (for कृथाः). D9 सीरनोपहंतव्यं पाघ्नं च माकृत (corrupt). ❀ Ca: सीरविघ्नं कृषिविघ्नम् । Cn (reading सार°): सारो विवाहादिकार्यं तत्र विघ्नम् । ❀ — After 15ab, M ins.:

305* पितरो देवता विप्राः शपन्त्यत्र निवारिते ।

— c) D7 T G1. 2. 5 M3 ह्यत्र (for यत्र). — d) D1 पितरे. Da [ऽ]थर्थयस् (for ऽतिथयस्). K1 सदा; D7 S (except M4; G3. 4 absent) च ह् (for तथा).

16 a) Bo. 3-5 सर्वसत्त्वेषु (for °भूतेषु). B1 वधे; D7 S (G3. 4 absent) वरो; D9 तथा (for च वै). — b) K5 भैक्षम्; B1 lacuna (for मोक्षम्). Ś1 K1. 2. 4 D1 इच्छति (for अर्हति). — c) K3. 5 V1 Bo. 2-5 Dn1 (m). n3 D2-5. 8 चो (D4 वा)पचितिस् (for चाप°). B1 कार्यान्नोपचितिस्तेषां; G2 सुकार्यापचितिस्तेषां. — d) K5 यद्; V1 B (except B4) D4. 9 T2 M वा (for या). Da D7 T1 G1. 2. 5 भावयेत्; D5 भारत (for या भवेत्).

17 a) D7 S (G3. 4 absent) स्वैते (for ह्येते). K V1 B Dn3 D1-5. 7-9 T G1. 2. 5 M2 संप्रदुष्टा (D7 T G1. 2. 5 °ष्टास्) (for °रुष्टा). — b) D1 मंत्रे यंति; D7 T G1. 2. 5 तस्य विद्यात् (for मन्त्रयन्ति). — d) K1 भ्राता (for त्राता).

18 a) K1 D1 ब्रह्मणान्; D9 ब्राह्मणं (for ब्राह्मणान्). K2. 3. 5 V1 B1. 2. 4 Da Dn1. n3 D2-4. 8. 9 S (G3. 4 absent) परिवदेद् (M1 °वदीद्; M3 °वदो) (for °भवेद्). — b) K2-5 V1 Bo. 2-5 Da Dn1. n3 D2. 3. 5. 8. 9 T2 चापि (for वापि). B2 रोचते; Dn1 रोदयेत् (for रोचयेत्). — c) K2 इवावश्ये; K3. 5 Da Dn1. n3 D2. 3. 8 इव ध्वांतं (K5 Dn1 °ते); D1 इवावध्यं; D5 इवारण्यं; M1. 2 इवापश्यं (for इवावश्यं). — d) Bo. 3. 4 तस्य तात; D5 तथा तात; D7 S (except M4; G3. 4 absent) ध्रुवस्तस्य (for ध्रुवं तस्य). Ś1 K2. 4 T2 पराजयः; Da1 पराभवं (for पराभवः).

19 D5 om. 19a-20b. — a) D4 इदेव (for इहैव). K1 Bo. 4 आसीना; K4 B3. 5 D9 M2 आसीनाः; D4 आसीत (for आसीनः). — b) K3. 5 V1 Bo. 1. 4 Da Dn1. n3 D1-4. 7. 8 T1 G2. 5 प्रत्याकांक्षेत; B2 °कांक्षीत; B3. 5 D9 °कांक्षत; T2 G1 प्र (G1 स)त्यकांक्षेत; M प्रेत्य कांक्षेत (M4 °क्षे च). K3. 5 Dn1. n3 D2-4. 7-9 T1 G2. 5 M सर्वशः; B Da T2 G1 सर्वतः (for शक्तितः). — c) Ś1 D1 ये ये न न; K1 ये येनेन; B1. 5 ये यानानु-; G1 येन येन (for ये ये नो न). — d) K5 D3. 8 तेन (for सेना). Ś1 om. [अ]भि. K2 Dn3 [अ]भियास्यसि; V1 B2 नियंस्यति; Da नियच्छति; G1 [अ]भिधास्यति (for °यास्यति). K3. 4 D2. 7 T1 G5 तांस्तांस्तेनाभियास्यसि (D7 T1 G5 °धास्यति); B1 तांस्तानेशना नियंस्यति (hypermetric); Dn1 तांस्तेन्सेना नियच्छत (sic).

20 D5 om. 20ab (cf. v. l. 19). — a) K1 Bo. 3-5 Da T2 शिष्टार्थं (B4 °र्थे-); K3 D4 शिष्टार्थे; D2. 3. 8 T1 G1. 2. 5 शिक्षार्थं; M1. 3 शिष्यत्वं; M2. 4 शिष्यर्थं (for शिष्ट्यर्थं). D7 शिक्षार्थं विदितो दंडो. — b) K2 वधार्थे; K5 Dn1. n3 D2. 3. 8 वृद्ध्यर्थं; D4 वधार्थं- (for वधार्थं). D7 S (G3. 4 absent) विधीयते (for

12. 4871
12. 135. 20
12. 135. 20

ये च शिष्टान्प्रबाधन्ते धर्मस्तेषां वधः स्मृतः ॥ २०
ये हि राष्ट्रोपरोधेन वृत्तिं कुर्वन्ति केचन ।
तदेव तेऽनु मीयन्ते कुणपं कृमयो यथा ॥ २१
ये पुनर्धर्मशास्त्रेण वर्तेरन्निह दस्यवः ।
अपि ते दस्यवो भूत्वा क्षिप्रं सिद्धिमवाप्नुयुः ॥ २२
भीष्म उवाच ।
तत्सर्वमुपचक्रुस्ते कापव्यस्यानुशासनम् ।
वृत्तिं च लेभिरे सर्वे पापेभ्यश्चाप्युपारमन् ॥ २३
कापव्यः कर्मणा तेन महतीं सिद्धिमाप्तवान् ।
साधूनामाचरन्क्षेमं दस्यून्पापान्निवर्तयन् ॥ २४
इदं कापव्यचरितं यो नित्यमनुकीर्तयेत् ।
नारण्येभ्यः स भूतेभ्यो भयमार्छेत्कदाचन ॥ २५
भयं तस्य न मर्त्येभ्यो नामर्त्येभ्यः कथंचन ।
न सतो नासतो राजन्स ह्यरण्येषु गोपतिः ॥ २६

इति श्रीमहाभारते शान्तिपर्वणि त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

---

विनिश्चयः). — $^c$) D1 तु (for च). B4 [अ]शिष्टान् (for शिष्टान्). B2 प्रबाधंति. — $^d$) K3. 5 V1 B1. 2. 5 Da Dn1. n3 D2. 3. 5. 8 दंडस्; B0. 3. 4 D7. 9 G2 M धर्म्यस् (for धर्मस्).

21 $^a$) K3. 5 V1 Da Dn1. n3 D2–4. 8. 9 ये च; B1. 2 येपि (for ये हि). — $^b$) Dn1 वृद्धिं (for वृत्तिं). B2–4 केनचित् (for केचन). — $^c$) Ś1 K2–5 B3–5 Dn1. n3 D2. 3. 5. 8 तदैव; K1 तवेव; B2 तदैवं (for तदेव). Dn1 मार्यते (for मीयन्ते). D7 S (G3. 4 absent) तानेवानु म्रियेरंस्ते. — $^d$) K3. 5 Da Dn1. n3 D2–5. 8. 9 T1 G5 कुणपे; B1 लवणं (for कुणपं). K2 B3 D1. 3. 7 G1 क्रिमयो; M2 कृपयो (for कृमयो).

22 $^a$) K1 ते (for ये). K3 D4 धर्मशास्त्रेषु (for °शास्त्रेण). — $^b$) D5 वर्तयंति (for वर्तेरन्). — $^c$) B0. 3–5 D5 ते भूत्वा क्रूरकर्माणः. — $^d$) D1 क्षिप्रे.

23 Ś1 K1. 2 D1. 9 G2 M4 om. the ref. — $^a$) B1. 2 Da ते; T2 तं (for तत्). K1. 3 V1 B0. 2. 3. 5 Da Dn1 D4. 7. 9 T1 G1. 2. 5 M अनुचक्रुस् (for उपचक्रुस्). V1 B1. 2 तत् (for ते). K5 B4 Dn3 D2. 3. 8 ते स( B4 तस्स )र्वमेवानुचक्रुः. — $^b$) K1. 3. 4 V1 B Da Dn1. n3 D8 कायव्यस्य; K2. 5 D2. 3 कापव्यस्य; D1 कायवस्य; D7 T1 G1. 2. 5 कापच्यस्य; D9 कापव्यस्य; M2 कावव्यस्य (for कापव्यस्य). D5 कायव्यायस्य शासनं. — $^c$) K3. 5 B3. 4 Da Dn1. n3 D2–4. 8. 9 वृद्धिं (for वृत्तिं). — $^d$) Ś1 K1. 2. 4 D1 [उ]पाचरन्; B1 [आ]पुयुः परं; D5 व्युपारमं (for [उ]पारमन्).

24 $^a$) K1–4 V1 B Da Dn1 D1. 5 कायव्यः; K5 D2. 3. 8 कापव्यः; Dn3 काव्ययः; D7 T1 G1. 2. 5 कापच्यः; D9 कापथ्य (for कापव्यः). — $^b$) D4 महती. K1 आप्नुयात् (for आप्तवान्). — $^c$) B0. 3. 5 आचरेत्; B4 आचरत्; Dn3 आददन्; D7 T1 G1. 2. 5 आवहन्; M आहरन् (for आचरन्). — $^d$) B0. 3–5 D4 निवर्तयेत्; G1 निवर्तते (for निवर्तयन्). V1 B1 दस्यून्पापान्यवर्तयन् (V1 °येत्).

25 D5 om. 25$^a$–26$^b$. — $^a$) K1. 3–5 V1 B Da Dn1. n3 D1 कायव्य°; K2 D2. 3. 8 कापव्य°; D7 T1 G1. 2. 5 कापच्य°; D9 कापथ्य° (for कापव्य°). — $^b$) K3 D4. 9 अभि( D9 °पि )कीर्तयेत्; K4. 5 Dn1. n3 D3. 8 अनुचिंतयेत्; V1 M1. 3 अनुवर्तयेत् (for °कीर्तयेत्). — $^c$) K5 V1 B1. 2 Da Dn1. n3 D2. 3. 8 T2 हि; G1 [ऽ]पि (for स). — $^d$) K1 D4 अर्छेत् (for आर्छेत्). K3. 5 V1 B Dn1. n3 D2. 3. 8. 9 भयं प्राप्नोति किंचन (Dn3 केचन); D7 S (G3. 4 absent) भयमृच्छेत्कथंचन.

26 D5 om. 26$^{ab}$ (cf. v. l. 25). — $^a$) D4 om. न. V1 B Da D7. 9 S (G3. 4 absent) न भयं तस्य (by transp.). K3. 5 Dn1. n3 D2. 3. 8 न भयं तस्य भूतेभ्यः. — $^b$) Ś1 G1 M1. 2 नमर्त्ये( Ś1 °र्ते )भ्यः; K2 lacuna; K4 B1. 4. 5 नामर्तेभ्यः; T2 ह्यमर्तेभ्यः (for नामर्त्येभ्यः). Ś1 K2. 4 D1 कदाचन; V1 B1 च भारत (for कथंचन). K3. 5 Dn1. n3 D2. 3. 8 सर्वेभ्यश्चैव भारत; B2 नागेभ्यो नैव भारत; Da नागेभ्यश्चैव भारत. — $^c$) K1 B4 नासतो; M1 न सत्यो (for न सतो). D1 न सतो; G1 नासदो (for नासतो). G2 राज्यं (for राजन्). K5 Dn3 D2. 3. 8 नासतो न सतो राजन्. — $^d$) T2 न (for स). M2 ह्यरण्यस्य (for °ण्येषु). K1 गोमतिः (for गोपतिः). M1. 3 स ह्यरण्यस्य गोपिता.

# १३४

भीष्म उवाच ।
अत्र गाथा ब्रह्मगीताः कीर्तयन्ति पुराविदः ।
येन मार्गेण राजानः कोशं संजनयन्ति च ॥ १
न धनं यज्ञशीलानां हार्यं देवस्वमेव तत् ।
दस्यूनां निष्क्रियाणां च क्षत्रियो हर्तुमर्हति ॥ २
इमाः प्रजाः क्षत्रियाणां रक्ष्याश्चाद्याश्च भारत ।
धनं हि क्षत्रियस्येह द्वितीयस्य न विद्यते ॥ ३
तदस्य स्याद्बलार्थं वा धनं यज्ञार्थमेव वा ।
अभोग्या ह्योषधीश्छित्त्वा भोग्या एव पचन्त्युत ॥ ४
यो वै न देवान्न पितॄन्न मर्त्यान्हविषार्चति ।
आनन्तिकां तां धनितामाहुर्वेदविदो जनाः ॥ ५
हरेत्तद्द्रविणं राजन्धार्मिकः पृथिवीपतिः ।

C. 12. 4883
B. 12. 136. 6
K. 12. 136. 6

Colophon. — *Sub-parvan:* Ś1 K Bo. 3. 5 Da1 Dn1. n3 D1–5. 9 आपद्धर्म; B1. 2 D7 S (G3. 4 absent) राजधर्म; B4 राजधर्मे आपत्सु. — *Adhy. name:* Ś1 K1 M1–3 काप्यव्यचरितं; K2. 3. 5 D2. 3 काप्यव्यचरितं; K4 V1 Bo–2 Da Dn1. n3 D1. 4. 5 कायव्यचरितं; D7 कापेव्यचरितं; D9 कापथ्यचरितं; T1 कामव्यचरितं; G2. 5 कापव्यचरितं. — *Adhy. no.* (figures, words or both): B1 125; B3–5 134; Da1 Dn1 5; D7 G1. 2 M 137; D3 3; T1 G5 138; T2 136. — *Śloka no.:* K3 Da1 Dn1. n3 26.

## 134

1 G1 om. the ref. —$^{a}$) D7 G1 गाथां; T2 गाथां (for गाथा). D5 पुरा गीताः; D7 T G1. 5 ब्रह्मगीतां (T1 G5 °ता). —$^{c}$) K5 V1 B1. 2 Da Dn1. n3 D2. 3. 8 राजा वै; D9 राजेंद्राः; T2 राजेंद्र (for राजानः). —$^{d}$) V1 B Da कोषं (for कोशं). K3. 5 V1 Bo. 2. 4 Da Dn1. n3 D2–4. 8. 9 संजनयन्त्युत (D9 om. त); B3. 5 D7 S (G3. 4 absent) °यंत्युत (for °यन्ति च). D5 हि (for च).

2 With $2^{ab}$, cf. Manu. 11. $18^{ab}$, $20^{ab}$. —$^{a}$) Bo. 4. 5 धनं न (by transp.); D4 धनेन; T1 नयनं. —$^{b}$) Ś1 D1 ब्रह्मस्वम्; Da2 दैवस्वम् (for देव°). K2. 3. 5 V1 B D (except D4. 9; Dn2 D6 absent) S (G3. 4 absent) च (for तत्). —$^{c}$) Dn3 निष्क्रयाणां व; D4. 9 क्षत्रियाणां च (D4 वा) (for निष्क्रियाणां च). K1 तु (for च). —$^{d}$) K2. 4 M1 हंतुम् (for हर्तुम्).

3 $^{a}$) Bo. 3 D5 इह (for इमाः). —$^{b}$) D4 चात्याश्च; D7 T G1. 2. 5 ह्या(T वा)न्याश्च; D9 (marg.) गोप्याश्च (for चाद्याश्च). K3 V1 B Da Dn1 D5 र(B3 न)क्ष्या भोग्या(V1 Bo °ज्या)श्च भारत; K5 Dn3 D2. 3. 8 राज( Dn3 D3. 8 °ज्य )भोज्या( D3. 8 °ग्या )श्च भारत. —$^{c}$) K1 क्षत्रियस्येव; K3. 5 V1 B Da2 Dn1. n3 D2. 3. 5. 8 °स्यैव; Da1 °श्चैव.

4 $^{a}$) K5 D2. 3. 8 तदर्थं; D5 तदास्य (for तदस्य). D4 हि (for स्याद्). B2 (marg. as in text) Da D5 धनार्थं (for बलार्थं). Dn3 च (for वा). —$^{b}$) K3 Bo. 3. 5 Da2 Dn1. n3 D2. 3. 5. 8. 9 च (for वा). — T2 G1 read $4^{cd}$ after $6^{ab}$. —$^{c}$) K3 D5 T2 M1–3 Cv अभोज्याः (for अभोग्या). K2 V1 Bo D4. 7 T G2. 5 M ह्यौषधीश्; K3. 5 B1–5 Da Dn1. n3 D2. 3. 5. 8 चौष° (for ह्योष°). Dn3 स्थित्वा (for छित्त्वा). —$^{d}$) Bo. 3–5 एवं. Da भवंत्युत; D5 प्रचक्षते; D9 वपंत्युत (for पचन्त्युत). D4 भोज्यायैव ध्रियंत्युत; D7 T G2. 5 M भोज्या (M1 °ज्य) एव भवं(M1 °व)त्युत.

5 $^{a}$) K3 V1 B1. 2 Da Dn1. n3 D3. 8. 9 यो नैव; B4 यो*न; D2 *न वै; D4 येनेव (for यो वै न). Bo. 3. 5 D5. 7 T G1. 2. 5 M3. 4 यो (G1 ये) वै (Bo. 3. 5 D5 G1 न) देवान्न च पितॄन्. —$^{b}$) K1 मंत्यार् (sic); K2 मत्स्यान्; D1 corrupt; D7 T2 मान्यान् (for मर्त्यान्). B1 [अ]र्चते (for [अ]र्चति). —$^{c}$) K1. 4 V1 Bo. 1. 3. 5 Da अनर्थिकां तां; K2 आनंतिकानां; B2. 4 अनार्थकां तां; T1 G5 अनर्थकांतर्; G2 M2. 4 अनर्थिकां (M2 °नां) तद्. (for आनन्तिकां तां). K1 पनिताम्; Bo Da धनतास्. K3 D4 अनर्थिका (D4 °र्थकं) तद्धि धनस्; K5 Dn1. n3 D2. 3. 5. 8. 9 अनर्थकं धनं तत्र (Dn1 तत्तु; D5 तस्य); D7 G1 अनर्थकां तद्धनिताम्; T2 अनर्थिकांस्तद्धनिकान्; M1. 3 अनर्थिकांस्तंतनिताम् (sic). —$^{d}$) K5 B1 Dn1. n3 D2. 3. 5. 8. 9 प्राहुर् (for आहुर्). K3 V1 B1. 2 Da Dn1 D7 T1 G1. 2. 5 M1. 3. 4 धर्मविदो; T2 अर्थविदो (for वेदविदो).

6 $^{a}$) K2. 5 Bo. 3 Dn1. n3 D3. 4. 8 हरेत; K4 B5 हरेत्तु; V1 B1. 2 हरते; T2 हरेत्तद्; G1 हरेत्तं (for

:.11. 4883
B. 12. 136. 6
K. 12. 136. 6

न हि तत्प्रीणयेल्लोकान्न कोशं तद्विधं नृप ॥ ६
असाधुभ्यो निरादाय साधुभ्यो यः प्रयच्छति ।
आत्मानं संक्रमं कृत्वा मन्ये धर्मविदेव सः ॥ ७
औद्भिज्जा जन्तवः केचिद्युक्तवाचो यथा तथा ।
अनिष्टतः संभवन्ति तथायज्ञः प्रतायते ॥ ८
यथैव दंशमशकं यथा चाण्डपिपीलिकम् ।
सैव वृत्तिरयज्ञेषु तथा धर्मो विधीयते ॥ ९
यथा ह्यकस्माद्भवति भूमौ पांसुतृणोलपम् ।
तथैवेह भवेद्धर्मः सूक्ष्मः सूक्ष्मतरोऽपि च ॥ १०

इति श्रीमहाभारते शान्तिपर्वणि चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

---

हरेत्तद्). D4 द्रविणो (for द्रविणं). Bo-2. 5 Da Dn1 D7 T G1. 2. 5 राजा (for राजन्). — b) D5 धार्मिक-; T2 G1 रक्षार्थं (for धार्मिकः). K2 पृथिवीपते. —After 6ab, T2 G1 read 4ab, om. 6c–7d. — c) M2–4 यो हि नः (M2 न) (for न हि तत्). G2 न; M1 नः (for तत्). Ś1 K1. 2. 4 D1. 4 लोकं; B4 D5 लोको; M3. 4 लोका (for लोकान्). K5 Dn3 D2. 3. 8. 9 ततः प्रीणयते लोकं. — d) K5 Dn3 D2. 8 शोकं; V1 B Da कोषं (for कोशं). Da तद्विदुर्जनाः; Dn1 तद्विदुर्बुधाः; D4 न द्विजोत्तमान्; M2–4 विद्धि तं नृपं (for तद्विधं नृप). K2. 5 Dn3 D2. 3. 8. 9 नृपः; D5 नृपं (for नृप). K3 न तं कोशो विदुर्जनाः; D7 T1 G2. 5 M1 न लोको गर्हते नृपं.

7 = (var.) 12. 130. 4. Cf. Manu. 11. 19. T2 G1 om. 7 (cf. v. l. 6). — a) K3. 5 V1 B Dn1. n3 D2. 3. 5. 8 [ऽ]र्थं(B1 °न्न)मादा(D5 °धा)य; Da स्वमादाय; M1 निरामाय (for निरादाय). — b) Bo. 3. 5 D5 M2 सं- (for यः). — c) Dn3 स क्रमं (for संक्रमं). — d) K1 भवे; D1 मान्ये; M2 मध्ये (for मन्ये). K1 Bo. 1. 3. 5 D5. 7. 9 T1 G2. 5 M धर्मकृद्; Da कर्मविद् (for धर्मविद्). K3. 5 B4 Dn1. n3 D2–4. 8 कृत्स्नधर्मवि(K3 D4 °कृ)देव सः. — After 7, K5 Dn1. n3 D2. 3. 8 ins.:

306* तथा तथा जयेल्लोकाञ्शक्त्या चैव यथा तथा ।

[Dn1 यथा यथा (for यथा तथा).]

8 a) Ś1 K1. 3–5 Bo. 3–5 Da Dn1. n3 D1–4. 8. 9 उद्भिज्जा; K2 उद्भिजाज्; V1 B1 D7 T2 औद्भिदा (for औद्भिज्जा). K3. 5 V1 B Da Dn1. n3 D2–5. 7–9 M यद्वद् (for केचिद्). ❀ Cv (reading अद्भिस्तु): अद्भिर्वर्षाकाले यथा यदृच्छया जन्तवः संभवन्ति । ❀ — b) K1 युक्तावाच्य; K3 शुष्का वाचो; K5 B1. 4 Dn1. n3 D2. 3. 8 शुक्लजीवा; V1 B2 D5 सूक्ता (D5 °क्त-) वाचो; Bo. 5 D7 S (G3. 4 absent) Cv श्रुत्वा वाचो; B3 वक्ता न्यायं (sic); Da शक्ता वाचो; D1 युक्तं वाचो; D4 corrupt; D9 अंडजा वा (for युक्तवाचो). B1 Dn1 यथा यथा. ❀ Cv (reading श्रुत्वा वाचः): यथा वाचः श्रुत्वा अनिच्छतोऽपि बालस्य तदा तद्वदेव वाचो यदृच्छया संभवन्ति । ❀ — c) Ś1 अनिष्टितः; K5 Dn1. n3 D2. 3. 8 अनिमित्तान्; D5 अशिष्टतः; D9 अनिवृत्ताः (for अनिष्टतः). G2 M3 संभवति (for संभवन्ति). T2 अनिष्टं तद्धि भवति. — d) D5 om. (hapl.) from यज्ञः up to यथा (in 10a). Ś1 K2. 4 यथा यज्ञः. K2–5 V1 Bo. 2–5 Dn1. n3 D2–4. 7. 9 T G1. 2. 5 M4 Cv प्रजा- (K4 °ती)यते; B1 Da प्रजापते; M2 प्रवर्तते (for प्रतायते). K1 तथावज्ञ प्रजयते (sic).

9 D5 om. 9 (cf. v. l. 8). — a) V1 तथैव. Ś1 K2 D1 दंशमषकं; Bo. 3–5 दंशमशकां (Bo. 4. 5 °का); B1 दंशामशकं; B2 दंशमसकं; D4 दंशकंयुकां; M1. 3. 4 दंशमशके; M2 दंशके चैव (for दंशमशकं). — b) V1 B1 D4 तथा (for यथा). Ś1 K4 D1 चंडपिपीलिका; K1–3. 5 B Da D4 चंडपिपीलिकं (K1 °लुकं; Da1 °लिकाः); V1 चांडपिपीलिका; D7 S (G3. 4 absent) कीटपिपीलिकं (T2 °कः; M °के). — c) T2 नैव; G2 सर्व- (for सैव). D9 इयं यज्ञे (for अयज्ञेषु). K1 सर्ववृत्तियजज्ञेषु (sic). ❀ Cn: सैव यथा दंशाद्या गवादिभ्यो अपोह्यन्ते, एवं राष्ट्रादयज्ञा अपि अपोह्याः । ❀ — d) K5 Da Dn1. n3 D2. 3. 7. 8 T1 G1. 2. 5 यथा (for तथा). B3. 4 तथा कर्म; D9 तस्माद्यज्ञो (for तथा धर्मो). D4 [ऽ]भिधीयते (for विधीयते).

10 D5 om. up to यथा (cf. v. l. 8). Da2 reads 10 twice. — a) Ś1 K4 त(K4 य)था हि कस्माद् (for यथा ह्यकस्माद्). — b) K3 D9 T1 G2. 5 पांशु(T1 G2. 5 °सु)तृणोलुपं; K5 Dn1. n3 D2. 3. 8 पांशु(Dn1 °सु)र्विलोलितः; V1 Bo. 2. 4. 5 पांसुतृणोलपं; B1 पाशोर्नवालयं; B3 D7 T2 M2. 4 पांसुतृणोपलं; Da D1 पांशु(D1 °सु)तृणोलयं; D5 पांशुर्विलोलुपं (for पांसु-

# १३५

भीष्म उवाच ।
अत्रैव चेदमव्यग्रः शृण्वाख्यानमनुत्तमम् ।
दीर्घसूत्रं समाश्रित्य कार्याकार्यविनिश्चये ॥ १
नातिगाधे जलस्थाये सुहृदः शकुलास्त्रयः ।
प्रभूतमत्स्ये कौन्तेय बभूवुः सहचारिणः ॥ २
अत्रैकः प्राप्तकालज्ञो दीर्घदर्शी तथापरः ।
दीर्घसूत्रश्च तत्रैकस्त्रयाणां जलचारिणाम् ॥ ३
कदाचित्तज्जलस्थायं मत्स्यबन्धाः समन्ततः ।
निःस्रावयामासुरथो निम्नेषु विविधैर्मुखैः ॥ ४
प्रक्षीयमाणं तं बुद्ध्वा जलस्थायं भयागमे ।

C. 12. 4894
B. 12. 137. 6
K. 12. 137. 6

तृणोलपम्). G2 धर्मं (for धर्मः). — d) D5 सूक्ष्मात् (for सूक्ष्मः). K1. 3. 5 V1 B Da Dn1. n3 D2. 3. 8. 9 T2 M1-3 तथा; D4. 5 सदा; D7 T1 G1. 2. 5 स्मृतः (for ऽपि च). M4 सूक्ष्मसूक्ष्मतरस्य तां.

Colophon om. in D9. — *Sub-parvan:* Ś1 K V1 B0. 2. 5 Da Dn1. n3 D2-5 आपद्धर्म (V1 B0. 5 आपत्सु); B1 राजधर्मे आपद्धर्मे; B3. 4 राजधर्मे आपत्सु; D7 S (G3. 4 absent) राजधर्म. — *Adhy. name:* M1-3 हार्याहार्यकथनं. — *Adhy. no.* (figures, words or both): B1 126; B3. 4 135; Da1 Dn1 6; D8 4; T1 G5 139; T2 137; G1. 2 M1. 2. 4 138; M3 148 (sic). — *Śloka no.:* K3 Da1 Dn3 10; Dn1 11; D9 18.

## 135

☞ With this adhy., cf. the Mitacintijātakam (No. 114); Pañcatantra I, kathā 14; Hitopadeśa IV (p. 129ff.).

1 After the ref., K3-5 V1 B Da Dn1. n3 D2. 3. 5. 8 G1. 5 ins. (Dn3 D2. 3 repeating it after 19):

307* अनागतविधाता च प्रत्युत्पन्नमतिश्च यः ।
द्वावेव सुखमेधेते दीर्घसूत्री विनश्यति ।

[ = Pañcatantra 318; Hitopadeśa IV. 5. — (L. 1) D5 तथा (for च यः). — (L. 2) K3 B0. 4 द्वावेतौ; D5 द्वावेते (for द्वावेव). K3. 4 D2. 3. 8 दीर्घसूत्रो. ]

— a) D4 अथैव (for अत्रैव). K2. 3 Dn1 D7 T1 G1. 2. 5 M1. 3. 4 अव्यग्रं (for अव्यग्रः). — b) K2. 3. 5 Dn1. n3 D2. 3. 5. 8. 9 शृणुष्वाख्यानमुत्तमं. — c) K3. 5 B0. 1. 3-5 Dn1. n3 D2-5. 8. 9 M उपाश्रि(D4 °सृ-; M2 °श्रु)त्य; V1 B2 Da D7 T G1. 2. 5 अपाश्रित्य (for समाश्रित्य). — d) D3. 5. 8 कार्याकार्ये; M4 कार्यकार्य- (for कार्याकार्य-).

2 a) Ś1 K1. 4 D1. 4 नातिगाध- (K4 °धि-) (for °गाधे). K3. 5 B1. 2 Da Dn1. n3 D2. 3. 5. 8 जलाधारे; V1 B2. 5 (both marg.) S (G3. 4 absent) जलस्थाने; B4 जलास्थाये; D4 -जलस्थय- (for जलस्थाये). — b) K1-3. 5 V1 Dn3 D2. 3. 8 कुशलास्; K4 D5 स(D5 सु)कुलास्; B0 Da शकुनास्; D9 च कृषास् (for शकुलास्). D4 स्त्रियः (for त्रयः). D7 कुशलाः सुहृद्स्मृतः (sic); S (G3. 4 absent) कुशलाः (T1 °लः) सुहृदस्त्र(G1 °स्त्रि)यः. — c) B1 प्रभूतमत्स्याः (for °मत्स्ये). — d) D4 वनचारिणः (for सह°).

3 a) B0. 1. 3-5 D4. 5. 7 T1 G1. 2. 5 M2. 4 तत्रैकः; D9 तत्रैक-; M1. 3 तत्रैव (for अत्रैकः). K3. 5 V1 B2 Da Dn1. n3 D2. 3. 8 तत्रैको दीर्घकालज्ञ-. — b) K3. 5 V1 B1. 2 Da Dn1. n3 D2. 3. 8 उत्पन्नप्रतिभो(Dn1 °भो)परः (Da °वरः). — c) B0 दीर्घसूत्रस्तु; Dn3 D9 °सूत्रस्य (for °सूत्रश्च). D5 तथैवैकस्; D7 T1 G1. 5 तथा चैकस्; G2 तथैकश्च (for च तत्रैकस्). D1 तथैको दीर्घसूत्रश्च. — d) K2 जलचारिणः; K3. 5 V1 B1. 2 Da Dn1. n3 D2. 3 सहचारिणां (K5 Dn3 D3 °णः) (for जल°).

4 a) Ś1 K1. 2. 4 Dn1 D9 तं; B3. 4 D1 तु; Dn3 ते (for तज्-). K3. 5 D2-4. 7 S (G3. 4 absent) ते (K5 D2. 4 तं; D7 S [G3. 4 absent] तज्) जलस्थानं; V1 B0-2. 5 Da तु (V1 ते; Da तज्) जलं तस्मान्; D5 तं जलच्छायं (for तज्जलस्थायं). D8 तत्रैको दीर्घकालज्ञो. — b) Ś1 मत्स्यबंधः; B1 °धान्याः; D4 °बंधान् (for °बन्धाः). — c) All MSS. (except Ś1 K4 Dn1; Dn2 D8 G3. 4 absent) निस्राव(D4 °स्राव्य-; Dn3 D9 °श्राव)यामासुर् (for निःस्रा°). — d) Ś1 (orig.) जलैः; Ś1 (by corr.) D1. 4 विधैः (for मुखैः).

5 a) Ś1 D1 प्राक्षीयमाणं; T2 प्रक्षीयमाणे. Ś1 K2 तं बद्धा; K1 B4 तं बुद्धा; K3 V1 Da1 D2. 3. 8 तद्दृष्ट्वा; K5 B1. 2 Da2 Dn1. n3 तं दृष्ट्वा; B3 D7 S

12. 4894
12. 137. 6
12. 137. 6

अब्रवीद्दीर्घदर्शी तु तावुभौ सुहृदौ तदा ॥ ५
इयमापत्समुत्पन्ना सर्वेषां सलिलौकसाम् ।
शीघ्रमन्यत्र गच्छामः पन्था यावन्न दुष्यति ॥ ६
अनागतमनर्थं हि सुनयैर्यः प्रबाधते ।
न स संशयमाप्नोति रोचतां वां व्रजामहे ॥ ७
दीर्घसूत्रस्तु यस्तत्र सोऽब्रवीत्सम्यगुच्यते ।
न तु कार्या त्वरा यावदिति मे निश्चिता मतिः ॥ ८
अथ संप्रतिपत्तिज्ञः प्राब्रवीद्दीर्घदर्शिनम् ।
प्राप्ते काले न मे किंचिन्न्यायतः परिहास्यते ॥ ९
एवमुक्तो निराक्रामद्दीर्घदर्शी महामतिः ।
जगाम स्रोतसैकेन गम्भीरसलिलाशयम् ॥ १०
ततः प्रस्रुततोयं तं समीक्ष्य सलिलाशयम् ।
बबन्धुर्विविधैर्योगैर्मत्स्यान्मत्स्योपजीविनः ॥ ११
विलोड्यमाने तस्मिंस्तु स्रुततोये जलाशये ।
अगच्छद्ग्रहणं तत्र दीर्घसूत्रः सहापरैः ॥ १२
उद्दानं क्रियमाणं च मत्स्यानां वीक्ष्य रज्जुभिः ।

---

(G3.4 absent) तद्बुद्ध्वा (for तं बुद्ध्वा). — b) K3.5 V1 B1 Da D2.3.7.8 S (G3.4 absent) जलस्थानं; D5 °ध्वार्थं (for °स्थार्थं). V1 reads from भयागमे up to सर्वेषां (in $6^{b}$) on marg. K3 V1 B2 Da जलौकसां (K3 °सौ) (for भयागमे). — c) D5 च (for तु). — d) B2.4 D7 T G1.5 तथा; D5 ततः (for तदा).

6 V1 reads up to सर्वेषां on marg. — c) K1 गच्छावः; Dn3 D3.8 गच्छाम; D2 गच्छेम (for गच्छामः). — d) K3 B2 Da D4 M1.3 दुष्यते; D7 G2 M2 शुष्यति; T2 G1 M4 शुष्यते (for दुष्यति).

7 a) D5 यः (for हि). — b) B1.2 (marg.) सुनयो; D4 सुनयोर्; D5 T1 G2.5 स्वनयैर् (for सुनयैर्). M2 यत् (for यः). K5 Dn1.n3 D2.3.5.8.9 प्रबा- (D5 °भा)धयेत्; V1 प्रधावते; B3 lacuna; D7 T1 G2.5 प्रबोधते (for प्रबाधते). — c) K2.3.5 B3 Dn1.n3 D2.3.8 स न (by transp.). Bo.1.5 Da D4.5 न संशयमवाप्नोति. — d) D7 T G1.2.5 M4 तथान्यत्र; M1-3 तदन्यत्र (for रोचतां वां). K1 Bo.1.4.5 Da D5 वो; K5 V1 B2.3 Dn1.n3 D2-4.8 भो (for वां). T1 G2.5 प्रयामहे (for व्रजा°).

8 a) D5 दीर्घसूत्री (for °सूत्रस्). T2 G1 ततस् (for तु यस्). — b) D7 T2 G1.2.5 उच्यतां (for उच्यते). M2 सोब्रवीत्संप्रशुष्यतां. — c) Bo.4.5 Da च (for तु). K4 तुरा (for त्वरा). K2.3.5 V1 B Dn1.n3 D2.3.5.8.9 तावद्; Da काचिद् (for यावद्). D4.7 S (G3.4 absent) न तु (D4 न नु) तावत्त्वरा (G1.2 °त्त्वया; M4 °त्तथा) कार्या. — d) Dn1 D3.8 निश्चया (for निश्चिता).

9 a) V1 उत्पन्न-; D4 अथ स (for अथ सं-). Da2 corrupt. — b) D7 S (except T2; G3.4 absent) त्व(M अ)ब्रवीद् (for प्राब्रवीद्). K4 Bo.4 Da1 D1 दीर्घदर्शनं (D1 °नः). — c) D4.7 T1 G1.5 प्राप्तकाले. K4 कश्चिन् (for किंचिन्). — d) V1 D1.4.9 परिहास्यति; Da °हाप्यते; D7 °वार्यते (for °हास्यते).

10 a) K3 V1 B2 Da Dn1.n3 D2.3.8 श्रुत्वा (Da1 श्रुते) (for उक्तो). K4 निचक्राम; Dn1 निराक्रम्य (for निराक्रामद्). — c) D4.9 श्रोतसा. K3.5 Dn1.n3 D2.8 तेन (for [ए]केन). — d) Bo -शालि- लाशयं; B2 -सलिलाश्रयं.

11 Bo.5 om. (hapl.) $11^{ab}$. V1 reads $11^{ab}$ on marg. — a) K1.2.4 Dn3 D2.3.9 प्रस्तुत-; V1 Dn1 D5.7 T1 G5 प्रसृत-; G1 प्रसूत- (for प्रस्रुत-). D4 नु; T2 तु (for तं). D1 ततः प्रास्रुवत तोयं; G2 ततः प्रसृततोयांतं. — b) K1 समीक्ष्य सलिलाशयात्; K3-5 V1 B (Bo.5 om.) Da Dn1.n3 D2.3.5.8 प्रसमीक्ष्य (D8 °त्य) जलाशयं. — c) Dn3 बबंध (for बबन्धुर्). D4 योगे (for योगैर्). T2 बबंधुर्विविधोपायैर्. — d) G1 मत्स्यं (for मत्स्यान्). D8 मात्स्योपजीविनः.

12 b) V1 Bo.3 D4 श्रुततोये; M2 स्रुततोय- (for स्रुततोये). — c) B2 जगाम; D1 आगच्छद् (for अगच्छद्). K3.5 B4 Dn1.n3 D2.3.5.8 बंधनं; B1 भ्रमणं (for ग्रहणं). — d) D1 T G5 M1-3 तथापरैः; G1 सहावरैः (for सहापरैः). D4 प्रत्युत्पन्नमतिस्तदा.

13 a) K2 तद्दानं; K3 Cn उद्दाने; K4 उद्दामं; K5 B2 उद्दामे; V1 Da1 उदाने; Bo.5 T1 G5 (*inf. lin.*) उत्थानं; B1 Da2 Dn1 Cb उद्याने; B3 उज्जानं; B4 उद्यानं; B5 (marg.) उत्थाने; Dn3 D8 उद्यमे; D2 उदामे; D4 संदानं; M1 उदानं; M4 उद्दनं; Cv उक्षणं (for उद्दानं). Ś1 K2 B2 (marg.) क्रियमानं (B2 °ने); K3.5 V1 B2 Dn1.n3 D2.3.5.8 Cn क्रिय-

प्रविश्यान्तरमन्येषामग्रसत्प्रतिपत्तिमान् ॥ १३
ग्रस्तमेव तदुद्दानं गृहीत्वास्त तथैव सः ।
सर्वानेव तु तांस्तत्र ते विदुर्ग्रथिता इति ॥ १४
ततः प्रक्षाल्यमानेषु मत्स्येषु विमले जले ।
त्यक्त्वा रज्जुं विमुक्तोऽभूच्छीघ्रं संप्रतिपत्तिमान् ॥ १५
दीर्घसूत्रस्तु मन्दात्मा हीनबुद्धिरचेतनः ।
मरणं प्राप्तवान्मूढो यथैवोपहतेन्द्रियः ॥ १६
एवं प्राप्ततमं कालं यो मोहान्नावबुध्यते ।
स विनश्यति वै क्षिप्रं दीर्घसूत्रो यथा झषः ॥ १७
आदौ न कुरुते श्रेयः कुशलोऽस्मीति यः पुमान् ।
स संशयमवाप्नोति यथा संप्रतिपत्तिमान् ॥ १८
अनागतविधानं तु यो नरः कुरुते क्षमम् ।
श्रेयः प्राप्नोति सोऽत्यर्थं दीर्घदर्शी यथा ह्यसौ ॥ १९
कलाः काष्ठा मुहूर्ताश्च दिना नाड्यः क्षणा लवाः ।
पक्षा मासाश्च ऋतवस्तुल्याः संवत्सराणि च ॥ २०
पृथिवी देश इत्युक्तः कालः स च न दृश्यते ।

C. 12. 4910
B. 12. 137. 2
K. 12. 137. 2

माणे (for °मागं). K3. 5 Dn1. n3 D2-4. 8 M तु; D9 तन् (for च). — $^b$) K5 V1 B1. 2 (marg. as in text). 3 Da Dn1. n3 D2. 3. 8 Cn तत्र (for वीक्ष्य). — $^c$) D1 प्रविध्य; M2 प्रविशम् (for प्रविश्य). K2. 3. 5 Dn1. n3 D2. 3. 5. 8 एतेषां (for अन्येषाम्). — $^d$) Ś1 K1. 2. 4 D1. 5 अग्रे सं-; K3. 5 V1 B (except B3. 4) Da Dn1. n3 D2. 3. 8 स्थितः सं-; D4. 9 तस्थौ सं-; M2 अग्रतः (for अग्रसत्).

14 D1 reads 14–15 on marg. — $^a$) K3 D4 न्यस्तम्; K5 Dn1. n3 D2. 3. 8 गृह्यम् (for ग्रस्तम्). M1-3 एवं. D5 यद् (for तद्). K4 D2. 3. 8 उद्दामं; K5 V1 B0. 4. 5 Dn1. n3 उद्यानं; B3 उज्जानं; Da2 D5. 7 उद्रानं; T2 G5 उत्थानं (for उद्दानं). D9 विन्यस्तमेतदुद्दानं. — $^b$) K1. 3 D5 M4 गृहीतास्ते; K2. 4. 5 B Da Dn1. n3 D1-3. 8 T2 G2 गृहीत्वा तं (D1 तु); V1 °ते तु; D4. 9 गृहीत्वाशु; D7 T1 G1. 5 °त्वा तत् (for गृहीत्वास्त). B1. 2 Da तथोत्तमं (Da2 °त्तरं); D7 T1 G1. 5 तथा तु सः; T2 तथामृते (for तथैव सः). D1 सा; D4. 9 च (for सः). M1-3 गृहीत्वा (M1 °ता) त्वरितास्तथा. — $^c$) K3. 5 V1 B (except B0) Da Dn1. n3 D2. 3. 8. 9 च (for तु). D5 कृतांस्तेत्र; T2 कृतांस्तत्र (for तु तांस्तत्र). D4 corrupt. — $^d$) K3. 5 Dn1. n3 D3. 4. 9 ग्रथितान्; D5 यंत्रिता; D8 जथितान् (for ग्रथिता). B2 D5 (marg. as in text) इव.

15 D1 reads 15 on marg. — $^a$) B1 तत्र; M1 अत्र (for ततः). S (G3. 4 absent) प्रक्षाळ्यमाने (T1 G5 M2 °णे) षु. D5 प्रक्षाल्यमानेषु ततो. — $^b$) G1. 2 सर्वेषु; M2 ते विदुर् (for मत्स्येषु). K5 V1 B2-5 Da1 Dn1. n3 D2. 3. 5. 8 विपुले (for विमले). D4. 9 om. जले. — $^c$) K3 Dn1 मुक्त्वा (for त्यक्त्वा). K1 M2 रज्जु- (for रज्जुं). K2. 3 Dn1. n3 D1. 2 प्रमुक्तोसौ; K5 V1 B1. 2 Da D3. 8 विमुक्तोसौ; D9 वियुक्तोभूच् (for विमुक्तोऽभूच्). — $^d$) Da क्षिप्रं (for शीघ्रं). D2 om. सं. M2 स प्रति- (for संप्रति-).

16 $^a$) D1 corrupt; M1-3 हीनात्मा (for मन्दात्मा). — $^b$) D1 दीनबुद्धिर्; M1-3 मंद° (for हीन°). — V1 reads 16$^c$–18$^d$ on marg. — $^d$) D7 T G2. 5 M तथैव (for यथैव). K1 यथैवोपहितेंद्रियः; G1 तथैवाविजितेंद्रियः.

17 V1 reads 17 on marg. — $^a$) D2 प्राप्तमंतं; D9 °भयं; T2 G1 °क्रमं (for °तमं). — $^b$) Da2 °बुध्यसे (for °बुध्यते). — $^c$) T2 विनस्यति; G1 विमृश्यति (for विनश्यति). D5 क्षिप्रं च (for वै क्षिप्रं). — $^d$) D4 दीर्घसूत्री. K5 शठः (for झषः).

18 V1 reads 18 on marg. — $^b$) G1 [ऽ]स्ति (for ऽस्मि). — $^c$) K3 D4 संशयं समवा(D4 °मा)प्नोति; Dn3 पुमान्संशयमाप्नोति; D5. 7 S (G3. 4 absent) स च (D7 T G1. 2. 5 M4 हि) संशयमाप्नोति. — $^d$) D7 स प्रति-.

19 $^a$) K3. 5 V1 B D2-5. 8 -विधानं च; Dn3 -विधाता च (for °नं तु). — $^b$) K4. 5 V1 B1 Dn3 D2. 3. 8 क्षणात्; Dn1 M4 [ऽ]क्षयं (for क्षमम्). — $^c$) K2 मेयः; B1 श्रियं (for श्रेयः). K3 V1 D4. 9 सुव्यक्तं; K5 B Da Dn1. n3 D2. 3. 5. 8 स व्यक्तं; D1 सोत्यर्थे; D7 T1 G1. 5 M सोत्यंतं (for सोऽत्यर्थं). — $^d$) B4. 5 झषः (for ह्यसौ). — After 19, Dn3 D2. 3 repeat 307*.

20 $^a$) K3 D4. 9 काष्ठाः क्षणा; K5 V1 B1. 2 Da Dn1. n3 D2. 3. 8 काष्ठाः कला (by transp.); T2 कलाः काष्ठा. M1. 3 मुहूर्तानि; M2 °र्तादि- (for °र्ताश्च). — $^b$) K3-5 V1 B Da Dn1. n3 D2-5. 8. 9 दिवा; D7 T G1. 2. 5 M1. 3 दिन- (for दिना). K2 नाड्याः; K3. 5 B4. 5 Dn1. n3 D2-4. 8. 9 रात्रिः; K4 V1 B0-3

C. 17. 4910
B. 12. 137. 22
K. 12. 137. 22

अभिप्रेतार्थसिद्ध्यर्थं न्यायतो यच्च तत्तथा ॥ २१
एतौ धर्मार्थशास्त्रेषु मोक्षशास्त्रेषु चर्षिभिः ।
प्रधानाविति निर्दिष्टौ कामेशाभिमतौ नृणाम् ॥ २२

परीक्ष्यकारी युक्तस्तु सम्यक्समुपपादयेत् ।
देशकालावभिप्रेतौ ताभ्यां फलमवाप्नुयात् ॥ २३

इति श्रीमहाभारते शान्तिपर्वणि पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

# १३६

युधिष्ठिर उवाच ।
सर्वत्र बुद्धिः कथिता श्रेष्ठा ते भरतर्षभ ।
अनागता तथोत्पन्ना दीर्घसूत्रा विनाशिनी ॥ १

तदिच्छामि परां बुद्धिं श्रोतुं भरतसत्तम ।
यथा राजन्न मुह्येत शत्रुभिः परिवारितः ॥ २
धर्मार्थकुशल प्राज्ञ सर्वशास्त्रविशारद ।

---

Da D5. 7 S (G3. 4 absent) ॰राज्यः (for नाड्यः). K3 D4. 9 कला; K5 V1 B1. 2, 4, 5 Da Dn1. n3 D2. 3. 8 तथा (for क्षणा). — c) K5 V1 B1. 2 Da Dn1. n3 D2. 3. 8. 9 मासाः पक्षाः (by transp.); B4 D7 पक्षमासाः. K5 Dn1. n3 D2. 3, 7–9 S (G3. 4 absent) षड्; B0. 3–5 स (for च). — d) K1. 2 तुल्यः; K3 Dn1 D4. 9 कल्पः; K5 V1 B Da Dn3 D2. 3. 5. 7. 8 तथा; S (G3. 4 absent) कालः (for तुल्याः). K3. 5 Dn1. n3 D2–4. 8. 9 संवत्सरास्तथा; M1–3 ॰रा इति (for ॰राणि च).

21 a) D1 इत्युक्तं. M पूर्ग्रामशैल इत्युक्तो. — b) D7 T G1. 2. 5 स च कालो (by transp.); M देशः (M2 ॰श॰) कालो. M1–3 नु (for न). — d) K3. 5 B3 Dn1. n3 D2–4 ध्यायते (K3 ॰तो); D7 G1. 2 दूरतो (for न्यायतो). K1. 4 D1 यश्च तत्; D5 यं यथा; D7 G1. 2. 5 M न्यायतस्; T यत्नतस् (for यच्च तत्). T1 G1. 5 तदा; M1. 3 च तौ (for तथा).

22 V1 reads 22–23 on marg. — a) B1 धर्मानु॰ (for ॰र्थ॰). — b) D5 लोक॰ (for मोक्ष॰). — c) M2 प्रधाना इति. K1 D1. 4 निर्दिष्टो. — d) K2. 3. 5 V1 B Da Dn1. n3 D2–5. 8 T2 M कामे चा( B1 T2 ॰मा वा॰; Da ॰मे वा )भिमतौ नृणां; D7 T1 G1. 2. 5 तौ मे चाभि॰; D9 कामश्चाभि॰.

23 V1 reads 23 on marg. — a) K1. 3 D2. 4. 9 परीक्षकारी (K1 ॰रे) (for परीक्ष्य॰). K5 Da1 Dn1. n3 D2. 3 8 च; D9 स्यात् (for तु). — b) K2. 3 D2. 3 स सम्यगुप; Da सम्यक्समनु॰ (for ॰क्समुप॰). K3 D4 G1 M1. 3 ॰पादयन् (for ॰येत्). — c) K4 अभिप्रीतौ; T2 G1 ॰मतौ (for ॰प्रेतौ). — d) K1 उपाश्नुयात; K5 B4 Dn3 D2. 3. 8 अवाप्तवान् (for ॰प्नुयात्).

Colophon. — *Sub-parvan:* Ś1 K V1 B Da Dn1. n3 D1–5. 9 आपद्धर्म; D7 S (G3. 4 absent) राजधर्म. — *Adhy. name:* Ś1 K1. 2. 4 D1 दीर्घदर्शीयः; K3. 5 Dn3 शाकुंतलं; B0. 2–5 Da D5 शाकुनिकं; Dn1 D4 शाकुलं; D2. 3 शाकुनं; M1. 3 अनागतविधानस्तुतिः; M2 अनागतस्तुतिः. — *Adhy. no.* (figures, words or both): K3 137; B1 127; B3. 4 136; B5 6; Dn1 7; D8 5; T1 G5 140; T2 138; G1. 2 M 139. — *Śloka no.:* Dn1 24; Dn3 D8 25; D9 21.

## 136

☞ With this adhy., cf. the Kathāsaritsāgara, lambaka 6, taraṅga 7, st. 106–130; also Benfey's Pantschatantra, Einleitung, pp. 545–560, which gives a German translation of it.

1 d) K1. 3 D1–4. 8 M1 दीर्घसूत्र॰; K5 D5 ॰सूत्री (for ॰सूत्रा). K3 D1. 4. 9 ॰विनाशनी.

2 a) K5 Dn3 D2. 3. 8 तदा; Da परं (for परां). Dn1 श्रोतुं; T2 G1 शक्तिं (for बुद्धिं). — b) Dn1 बुद्धिं (for श्रोतुं). K3 M2 भरतसत्तमः; K5 Dn1. n3 D2. 3. 8 G2 ते (G2 हि) भरतर्षभ; D5 च कुरुसत्तम॰

पृच्छामि त्वा कुरुश्रेष्ठ तन्मे व्याख्यातुमर्हसि ॥ ३
शत्रुभिर्बहुभिर्ग्रस्तो यथा वर्तेत पार्थिवः ।
एतदिच्छाम्यहं श्रोतुं सर्वमेव यथाविधि ॥ ४
विषमस्थं हि राजानं शत्रवः परिपन्थिनः ।
बहवोऽप्येकमुद्धर्तुं यतन्ते पूर्वतापिताः ॥ ५
सर्वतः प्रार्थ्यमानेन दुर्बलेन महाबलैः ।
एकेनैवासहायेन शक्यं स्थातुं कथं भवेत् ॥ ६
कथं मित्रमरिं चैव विन्देत भरतर्षभ ।
चेष्टितव्यं कथं चात्र शत्रोर्मित्रस्य चान्तरे ॥ ७
प्रज्ञातलक्षणे राजन्नमित्रे मित्रतां गते ।
कथं नु पुरुषः कुर्यात्किं वा कृत्वा सुखी भवेत् ॥ ८
विग्रहं केन वा कुर्यात्संधिं वा केन योजयेत् ।
कथं वा शत्रुमध्यस्थो वर्तेताबलवानिति ॥ ९
एतद्वै सर्वकृत्यानां परं कृत्यं परंतप ।
नैतस्य कश्चिद्वक्तास्ति श्रोता चापि सुदुर्लभः ॥ १०
ऋते शांतनवाद्भीष्मात्सत्यसंधाज्जितेन्द्रियात् ।

C. 12. 4923
B. 12. 138. 11
K. 12. 138. 11

---

— c) V1 B Da T1 G5 M तथा (for यथा). K2.3.5 V1 Bo Da Dn1.n3 D2–4.8.9 M2.4 राजा (for राजन्). T1 G2.5 मुच्येत (for मुह्येत). — d) D7 T1 G1.2.5 परिपीडितः (for °वारितः).

3 D5 repeats $3^{a}$ after $4^{b}$. — a) K3.4 B1.2 Da ·कुशलः प्राज्ञः (K3 °ज्ञ); K5 Dn1.n3 D2.3.8 ·कुशलो राजा; D1 °लः प्रज्ञ; D5.7 S (G3.4 absent) ·कुशलं प्राज्ञं (for ·कुशल प्राज्ञ). — b) K2.3.5 Dn1.n3 D2–4.8 धर्म· (for सर्व·). K (except K1) B1.2 Da Dn1.n3 D1–3.8.9 ·विशारदः; D5.7 S (G3.4 absent) ·विशारदं (for ·विशारद). — B1 om. $3^{c}$–$5^{d}$. — c) K V1 B (B1 om.) Da Dn1.n3 D2–5.7.9 T G1.2.5 M1 त्वां (for त्वा). K3 D4 महाबाहो; G1 नरश्रेष्ठ (for कुरुश्रेष्ठ). — d) K1 तं (for तन्). Dn3 अर्हति (for अर्हसि). Bo.5 तन्मे ब्रूहि पितामह.

4 B1 om. 4 (cf. v. l. 3). — a) D5 ग्रस्तो (for ग्रस्तो). — b) D7 S (G3.4 absent) मुच्येत (for वर्तेत). K3 D4 भूमिपः; Da1 पार्थिव (for पार्थिवः). — After $4^{b}$, D5 repeats $3^{a}$. — c) D5 इच्छामहे. — d) D4 एतद् (for एव).

5 B1 om. 5 (cf. v. l. 3). — c) D7 S (G3.4 absent) हि (for [ऽ]पि). — d) D4 यतंत. V1 B2.5 (marg.) पूर्वनामिताः; D9 °तापितान् (for °तापिताः).

6 a) K5 B3 Dn1.n3 D2.3.8 सर्वत्र (for सर्वतः). Ś1 K1.2.4 D1 प्राप्यमानेन; D5 प्रार्थ्यमाणेन; G2 प्राद्यमानेन. — b) Ś1 K4 D1 स्वबलेन; K1 अबलेन. — c) D4 एकेनेव; M4 एतेनैव (for एकेनैव). T2 G1 M2 सहायेन (for [अ]स°). — d) K3 भवेन्न तु; K5 V1 B1.2.4 Da Dn1.n3 D2.3.8 भवेत्कथं (by transp.).

7 a) K5 B1 Dn1.n3 D2.3.7–9 S (G3.4 absent) चापि; V1 B2 Da वापि (for चैव). — b) K2.3.5 B3 Da Dn1.n3 D2–5.7.8 G2 विंदते (for विन्देत). — c) T1 G5 (*inf. lin.* as in text) वेदितव्यं (for चेष्टितव्यं). V1 वात्र; D1 चानु (for चात्र). — d) Da2 चोत्तरे; D5 चांतरं; G2 वांतरे; M1–3 चांतिके (for चान्तरे).

8 a) K3 B4 D4 अज्ञातलक्षणे; D7 S (G3.4 absent) अजातलक्षणे (D7 °णो) (for प्रज्ञात°). K5 Dn1.n3 D2.3.8.9 मित्रे; G2 राजा (for राजन्). — b) K5 Dn1.n3 D2.3.8.9 तथैव; G2 न मित्रे (for अमित्रे). — c) K1–3.5 B1 Da Dn1.n3 D2–5.8.9 G1 तु; K4 D1 न (for नु). D5 om. (hapl.) from कुर्यात् up to केन वा (in $9^{a}$). — d) K3 च (for वा). B1 Dn1 कृत्वा किं वा (by transp.). D1 किं चाहत्वा सुखे भवेत् (sic).

9 D5 om. up to केन वा (cf. v. l. 8). — b) Bo सम· (for केन). — c) D2 च (for वा). D5.8 शत्रुमभ्य(D5 °ध्ये)स्थो (for °मध्यस्थो). — d) D4 वर्तते. K2.3.5 B1.3 Dn1 D2–5.7.8 T2 G1 बलवानपि (D5 °निति); V1 Bo.4.5 Da Dn3 D9 T1 G2.5 M4 [अ]बलवानपि; M1–3 [अ]तीत(M2 °व)दुर्बलः (for [अ]बलवानिति).

10 a) Da एवं वै; D4 एतद्धि (for एतद्वै). D5 सर्वमाख्यातं (for °कृत्यानां). B1 om. from नां up to कृत्यं (in $10^{b}$). — b) B4 परंतपः; D5 परं तव; D7 S (G3.4 absent) नराधिप (for परंतप). V1 B1.2 परं कृत्यतमं मतं. — c) M1 न तस्य; M2 नैकस्य (for नैतस्य). D4 नैतत्कश्चित्प्रवक्तास्ति. — d) K2.3.5 B3.5 Dn1.n3 D2–5.7–9 T1 G1.2.5 M वापि; T2 वाथ (for चापि). Dn3 स दुर्लभः.

C. 12. 4913
B. 12. 138 11
K. 12. 138 11

तदन्विष्य महाबाहो सर्वमेतद्वदस्व मे ॥ ११

भीष्म उवाच ।

त्वद्युक्तोऽयमनुप्रश्नो युधिष्ठिर गुणोदयः ।
शृणु मे पुत्र कार्त्स्न्येन गुह्यमापत्सु भारत ॥ १२
अमित्रो मित्रतां याति मित्रं चापि प्रदुष्यति ।
सामर्थ्ययोगात्कार्याणां तद्गत्या हि सदा गतिः ॥ १३
तस्माद्विश्वसितव्यं च विग्रहं च समाचरेत् ।
देशं कालं च विज्ञाय कार्याकार्यविनिश्चये ॥ १४
संधातव्यं बुधैर्नित्यं व्यवस्यं च हितार्थिभिः ।
अमित्रैरपि संधेयं प्राणा रक्ष्याश्च भारत ॥ १५
यो ह्यमित्रैर्नरो नित्यं न संदध्यादपण्डितः ।
न सोऽर्थमाप्नुयात्किंचित्फलान्यपि च भारत ॥ १६
यस्त्वमित्रेण संधत्ते मित्रेण च विरुध्यते ।
अर्थयुक्तिं समालोक्य सुमहद्विन्दते फलम् ॥ १७
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मार्जारस्य च संवादं न्यग्रोधे मूषकस्य च ॥ १८
वने महति कस्मिंश्चिन्न्यग्रोधः सुमहानभूत् ।
लताजालपरिच्छन्नो नानाद्विजगणायुतः ॥ १९
स्कन्धवान्मेघसंकाशः शीतच्छायो मनोरमः ।
वैरन्त्यमभितो जातस्तरुर्व्यालमृगाकुलः ॥ २०

---

11 [a]) K3 D4. 7. 9 S (G3. 4 absent) पितामहाद् (for शांतनवाद्). — [c]) D7 T1 G2. 5 तदन्वीक्ष्य; T2 G1 तद्वीक्ष्य सु- (for तदन्विष्य). K5 Dn1. n3 D2. 3. 8 महाभाग (for °बाहो). — [d]) K5 Dn3 D2. 3. 8 सत्यम् (for सर्वम्). D4 एव (for एतद्). K3. 5 V1 B Da Dn1. n3 D2-5. 7-9 S (G3. 4 absent) ब्रवीहि मे (D7 T1 G2. 5 नः) (for वदस्व मे).

12 [a]) Ś1 K4 T2 त्वदुक्तो; D1 त्वदर्थो (for त्वद्युक्तो). T1 G5 अनुप्रज्ञो (for °प्रश्नो). — [b]) K2. 3. 5 V1 B1. 2 Da Dn1. n3 D2-4. 8. 9 सुखोदयः (for गुणोदयः). — [c]) K4 M4 कार्त्स्नेन (for कार्त्स्न्येन). D5 श्रृणु चैकमना भूत्वा.

13 With 13, cf. 12. 138. 51. — [a]) K5 मित्रतो (for मित्रतां). M2 यांति (for याति). — [b]) D4 वापि; T2 G1 चैव; M1. 3 चाति- (for चापि). D4 विरुध्यते; G1. 2 प्रदूष्यति (for प्रदुष्यति). — [c]) D1 समर्थयोगात्. — [d]) K3. 5 V1 B Da Dn1. n3 D2-5. 7. 9 S (G3. 4 absent) अनित्या वै (B0. 3-5 D5. 7. 9 S [G3. 4 absent] °त्या हि) (for तद्गत्या हि). D4 om. from त्या up to विनि (in 14[d]). V1 B1. 2 सतां (for सदा).

14 D4 om. up to विनि (cf. v. l. 13). — [a]) V1 B0. 1. 5 D1-3. 5 देशकालं (for देशं कालं). D9 तु (for च). — [d]) Dn3 -विनिश्चयं; D7 T1 G2. 5 -विनिर्णये (for -विनिश्चये).

15 [a]) B2 च वै क्षिप्रं (for बुधैर्नित्यं). — D1 om. (hapl.) 15[b]-16[a]. — [b]) K4. 5 V1 B0. 1. 5 Dn1. n3 D7 S (G3. 4 absent) व्यवस्य; D5 व्यवस्थं (for व्यवस्यं). — [c]) D5 सर्वेषां; D9 संध्येयं (for संधेयं). — [d]) K2. 3. 5 B1. 2 Da2 Dn1. n3 D2-4. 7. 8 S (G3. 4 absent) रक्ष्या हि; B0 रक्षाश्च; Da1 रक्ष्याभि-; D9 रक्षा हि (for रक्ष्याश्च).

16 D1 om. 16[a] (cf. v. l. 15). — [a]) Ś1 K2 मित्रैर्; D4 [अ]मित्रे (for [अ]मित्रैर्). D7 T2 G1. 2 नरैर् (for नरो). — [b]) K3 D4 च पंडितः. — [c]) G1 वोर्थम् (for सोऽर्थम्). Ś1 K1 B1 T1 G5 कंचित्.

17 [a]) K5 V1 B0-3. 5 Da Dn1. n3 D2. 3. 8 संदध्यान् (for संधत्ते). — [b]) D8 सं च रुध्यते (for च °विरुध्यते). — [c]) K4 Da1 T2 G1 अर्थयुक्तं; Dn3 D2. 3. 8 अथ युक्तिं (for अर्थयुक्तिं). B1 समालोच्य (for °लोक्य). — [d]) K3 सो महद्; V1 B Dn1. n3 D1-3. 5. 7-9 T1 G5 M1. 3 स महद् (for सुमहद्).

18 [a]) T1 G5 om. from रन्ती up to पुरा (in 18[b]). — [c]) K1 तु; D8 हि (for च). — [d]) K2. 5 V1 B Da Dn1 D3-5. 7. 8 S (G3. 4 absent) मूषिकस्य; K3 मूखकस्य (for मूषकस्य).

19 [c]) K1 V1 B0. 1. 3-5 D5. 7 S (G3. 4 absent) -प्रतिच्छन्नो; K4 Dn3 -परिच्छिन्नो (for °च्छन्नो). — [d]) K3. 5 B1. 2 Dn1. n3 D2. 3. 8 -गणान्वितः; D4 M2 -गणैर्युतः (for -गणायुतः).

20 [a]) M2 स्कंदवान् (for स्कन्ध°). — [b]) B1 D4 शीतच्छाया- (for °च्छायो). — [c]) Ś1 K5 B3 Dn1. n3 D2. 3. 8 T1 अरण्यम्; K1 अटव्यम्; K2 वैरव्यम्; K3 धरण्याम्; V1 Da वैवर्स्यम्; B0. 1. 5 वैरत्यम्; B2 वैरण्यम्; B4 वैचित्र्यम्; D4. 9 वर्द्धं तम्; D7 G1 वैरा-

2. 5032
2. 138. 120
2. 138. 121

उलूकनकुलौ तूर्णं जग्मतुः स्वं स्वमालयम् ॥ ११४
ततश्चिच्छेद तं तन्तुं मार्जारस्य स मूषकः ।
विप्रमुक्तोऽथ मार्जारस्तमेवाभ्यपतद्द्रुमम् ॥ ११५
स च तस्माद्भयान्मुक्तो मुक्तो घोरेण शत्रुणा ।
बिलं विवेश पलितः शाखां भेजे च लोमशः ॥११६
उन्माथमप्यथादाय चण्डालो वीक्ष्य सर्वशः ।
विहताशः क्षणेनाथ तस्माद्देशादपाक्रमत् ।
जगाम च स्वभवनं चण्डालो भरतर्षभ ॥ ११७
ततस्तस्माद्भयान्मुक्तो दुर्लभं प्राप्य जीवितम् ।
बिलस्थं पादपाग्रस्थः पलितं लोमशोऽब्रवीत् ॥ ११८
अकृत्वा संविदं कांचित्सहसाहमुपप्लुतः ।
कृतज्ञं कृतकल्याणं कच्चिन्मां नाभिशङ्कसे ॥ ११९
गत्वा च मम विश्वासं दत्त्वा च मम जीवितम् ।
मित्रोपभोगसमये किं त्वं नैवोपसर्पसि ॥ १२०

---

114 = (var.) 311*, lines 5-6. V1 Bo. 1. 5 Da om. 114 (cf. v. l. 112). — a) K2 Dn1 D2 कार्यार्थे; T1 M2 कार्यार्थ- (for कार्यार्थे). K3. 5 B3. 4 Dn1. n3 D3. 4. 8 कृतसंधानौ (D4 °नो) (for °संधी तौ). T2 M2 तु (for तौ). — b) K3. 5 B3. 4 Dn1. n3 D2. 3. 7. 8 S (G3. 4 absent) -मूषिकौ; D4 -मूषिको; D5 -मूखिकौ (for -मूषकौ). — c) K3. 5 Dn1. n3 D2. 3. 8 तत्र (for तूर्णं). — d) D1. 4 T1 G5 स्व- (for स्वं).

115 V1 reads 115ab on marg. — a) T1 G5 transp. तं and तन्तुं. K3. 5 V1 B1. 2. 5 (marg.; orig. as in text) Da Dn1. n3 D2. 3. 8 पाशं; B3 D5 तूर्णं; G1 तं तु (for तन्तुं). — b) G2 om. स. K2. 5 B4 Dn1. n3 D2. 3. 8 M2 च (for स). K3. 5 V1 B Dn1. n3 D2–5. 7. 8 S (G3. 4 absent) मूषिकः (for मूषकः). — c) V1 B2 Da1 विप्रयुक्तोथ (V1 °क्तस्तु); Bo. 5 प्रविमुक्तोथ; B4 प्रमुक्तोथ स; D9 प्रमुक्तः सोथ (for विप्रमुक्तोऽथ). — d) K4 [अ]भिपतद्; G1 ह्यप° (for [अ]भ्यप°). M4 द्रुतं (for द्रुमम्). D5 तमभ्येत्यापतद्द्रुतं.

116 D1 om. 116-117. — a) K2 स तस्मा. K2. 4 om. (hapl.) from द्भयान् up to ततस्तस्मा (in 118a). Bo. 3. 5 भयावर्तान् (for भयान्मुक्तो). K3. 5 V1 B1. 2 Da Dn1. n3 D2–4. 7. 9 S (G3. 4 absent) स तस्मात्संभ्रमावर्तान् (D4. 7. 9 S [G3. 4 absent] °मान्मुक्तो). — Ś1 reads 116b–118a on marg. — b) D4 तेन (for मुक्तो). B1 वेगेन; D5 घोरेण च (hypermetric) (for घोरेण). — c) D4 त्वरितः (for पलितः). — d) K3 शाखा. K5 Dn1. n3 D2. 3. 5. 8 लेभे (for भेजे). Ś1 K1 D4. 7. 9 T2 M2 रोमशः (for लोमशः).

117 K2. 4 D1 om. 117 (cf. v. l. 116). Ś1 reads 117 on marg. — a) D4. 7. 9 T1 G1. 2. 5 उपा(G2 om. पा)दाय; D5 अदायात्तं (for अथादाय). — b) K3. 5 B1 Da Dn1. n3 D2–4. 9 चांडालो (D4 °ले). D7 T1 G1. 2. 5 [ऽ]वेक्ष्य (for वीक्ष्य). B2. 3 D4. 9 सर्वतः (for सर्वशः). — c) Dn1 D3. 8 [आ]स्ते; V1 Bo. 1. 3–5 Da D4. 5. 9 [आ]शु; M [ए]व (for [अ]थ). K3. 5 Dn3 D2 विहिताशः क्षणेनास्ते; D7 T1 G1. 2. 5 विही(G1 °हि)नाशः क्षणेनैव. — d) Dn1 अपक्रमत्; Dn3 अपाक्रमात्. — M1–3 om. 11cf. — e) K5 Dn1. n3 D2. 3. 8 स; Da [अ]थ (for च). — f) K3. 5 B1 Dn1. n3 D2–5. 8 चांडालो; G1 चंडाळो.

118 K2. 4 om. up to ततस्तस्मा (cf. v. l. 116). Ś1 reads 118a on marg. — a) D1 स एतस्माद्. Da2 मुक्तं. — G2 om. (hapl.) 118c–120b. — d) Ś1 K1. 2. 4 D1. 4. 7. 9 T G1. 5 M2. 4 रोमशो.

119 G2 om. 119 (cf. v. l. 118). — a) K4 संविदां. K1. 5 D7 M2 कंचित्; K3 काश्चित्; B1 D5 किंचित् (for कांचित्). — b) K1 V1 B1. 2 Da D4. 9 अवप्लुतः (for उप°). K3. 5 Bo. 3–5 Dn1 D2. 3. 5. 8 सहसा समव(K3 °भि )प्लुतः (K5 °तं); Dn3 °सा समपृच्छतः; D7 T G1. 5 M सहसा त्वमप(T1 G5 °मुप-; G1 °मुपा)सृतः. — D4 om. 119c–120b. — c) B1 सुकृतं (for कृतज्ञं). K5 Bo. 3. 4 Dn1. n3 D2. 3. 5. 8 T2 (inf. lin.) -कर्माणं (for -कल्याणं). D7 T G1. 5 कृतज्ञः कृतकल्याणः. — d) Ś1 K1 D1. 7 कश्चिन्. Da1 D7 G1 M2. 4 मा (for मां). Bo D9 M नाति(M3 °स्ति; M4 °व )शंकसे; G1 नाभिशंससे (for °शङ्कसे).

120 D4 G2 om. 120ab (cf. v. l. 119, 118). — a) Bo. 4. 5 D9 T2 M मयि (for मम). — b) D5 om. च. D1 दत्वा च शमणीवितं (sic). — c) Da मित्रस्य योगसमये. — d) K3. 5 V1 B1–4 Da Dn1. n3 D2–5. 8. 9 किं मां त्वं न; Bo. 5 किमर्थं न; D7 T G1. 5 M किं हि मां न; G2 किमिहाद्य (for किं त्वं नैव). D1 तु (for त्वं). K3 D2 [उ]पसर्पसे (D2 °ति).

121 a) B3 कृत्वाहं (for कृत्वा हि). V1 B1. 3 D5 T2 पूर्वमित्राणि; M2 पूर्वा मित्राणि. — b) M4 पश्यन् (for पश्चान्). G1. 2 नाभितिष्ठति (for नानु°). — d)

कृत्वा हि पूर्वं मित्राणि यः पश्चान्नानुतिष्ठति ।
न स मित्राणि लभते कृच्छ्रास्वापत्सु दुर्मतिः ॥ १२१
तत्कृतोऽहं त्वया मित्रं सामर्थ्यादात्मनः सखे ।
स मां मित्रत्वमापन्नमुपभोक्तुं त्वमर्हसि ॥ १२२
यानि मे सन्ति मित्राणि ये च मे सन्ति बान्धवाः ।
सर्वे त्वां पूजयिष्यन्ति शिष्या गुरुमिव प्रियम् ॥१२३
अहं च पूजयिष्ये त्वां समित्रगणबान्धवम् ।
जीवितस्य प्रदातारं कृतज्ञः को न पूजयेत् ॥ १२४
ईश्वरो मे भवानस्तु शरीरस्य गृहस्य च ।
अर्थानां चैव सर्वेषामनुशास्ता च मे भव ॥ १२५
अमात्यो मे भव प्राज्ञ पितेव हि प्रशाधि माम् ।
न तेऽस्ति भयमस्मत्तो जीवितेनात्मनः शपे ॥ १२६
बुद्ध्या त्वमुशनाः साक्षाद्बले त्वधिकृता वयम् ।
त्वन्मन्त्रबलयुक्तो हि विन्देत जयमेव ह ॥ १२७
एवमुक्तः परं सान्त्वं मार्जारेण स मूषकः ।
उवाच परमार्थज्ञः श्लक्ष्णमात्महितं वचः ॥ १२८
यद्भवानाह तत्सर्वं मया ते लोमश श्रुतम् ।
ममापि तावद्ब्रुवतः शृणु यत्प्रतिभाति माम् ॥ १२९
वेदितव्यानि मित्राणि बोद्धव्याश्चापि शत्रवः ।
एतत्सुसूक्ष्मं लोकेऽस्मिन्दृश्यते प्राज्ञसंमतम् ॥ १३०

C. 12. 5048
B. 12. 138 137
K 12. 138. 137

---

K2. 3. 5 Dn3 T2 G1. 2 M2 कृच्छ्रास्स्वापत्सु; Da कृच्छ्रा-स्वा°; D5 न कृच्छ्रापत्सु (for कृच्छ्रास्वापत्सु).

122 K3 om. 122. —a) K5 V1 B Da Dn1. n3 D2. 3. 5. 7. 8 S (G3. 4 absent) सत्कृतोहं त्वया मित्र (Da2 त्वमित्रज्ञ; M2 त्वया मित्रः). —b) K1 सखा; M1. 3 सुखे (for सखे). —c) Ś1 K1. 2. 4 मां च; D7 T1 G2. 5 M2-4 स मा (for स मां). —d) B0. 3-5 इहार्हसि (for त्वमर्हसि).

123 b) G2 पांडवाः (for बान्धवाः). K2. 3. 5 V1 B Da Dn1. n3 D2. 3. 5. 8 ये च (B0. 3-5 D5 मे) संबंधि-बांधवाः. — D5 om. (hapl.) 123c–124b. —c) M1. 3. 4 त्वा (for त्वां). —d) K3 Dn3 सदा; M4 शिष्यं (for शिष्या). Da1 गुरुर्मम; D4. 7 T1 G1. 2. 5 इव गुरुं (by transp.). D7 प्रति (for प्रियम्).

124 D5 om. 124ab (cf. v. l. 123). —a) D1 M4 त्वा. D4 M1-3 अहं त्वां (M1. 3 त्वा; M2 च) पूजयिष्यामि- —b) Dn3 मित्रं स- (for समित्र-). K5 B0. 3-5 D7 T G1. 5 -बांधवः (for -बान्धवम्). B2 Da सीदमानः सबांधवः. —d) D4 T2 कृतज्ञं. D5 को नु; M4 का न (for को न).

125 a) D9 भवानस्य. —b) K3 Dn1. n3 स्वशरीर-; D9 जीवितस्य (for शरीरस्य). —c) V1 आत्मानं (for अर्थानां). —d) Da भवान् (for भव).

126 a) M4 भव मे (by transp.). G2 प्राज्ञः. —b) K1. 3. 5 V1 B Da Dn1. n3 D2. 3. 5. 7-9 S (G3. 4 absent) [इ]ह (for हि). M1. 3 प्रशास्ति (for प्रशाधि). —c) D1 ततो (for न ते). K2 भयसंमत्तो (for भय-मस्मत्तो). —d) K3 सपे (for शपे).

127 b) K3. 5 V1 B1-3 Da Dn1. n3 D2-4. 8 बले-नाधि-; B0 बलेष्वधि-; D9 बले चापि; T1 G1. 2. 5 बले त्वयि (for बले त्वधि-). —c) K3 त्वमत्र; Dn3 त्वं मित्र- (for त्वन्मन्त्र-). T2 -जययुक्तो; M3 -बलमुक्तो (for -बलयुक्तो). Ś1 K2. 4 वै (for हि). —d) K1 विंदेयं; D1 विंदते (for विन्देत). K3. 5 Da Dn1. n3 D2. 3. 8 दत्त्वा जीवितमद्य मे; V1 B D4. 5. 7. 9 S (G3. 4 absent) दद्या (M2 द्रव्या) द्विजयमेव (B1. 2 °मद्य) मे.

128 a) K3. 5 Dn1. n3 D2. 3. 8 परां शांतिं; V1 Da1 परं शांत्वं; B2. 4 परां सांत्वं; B3 D5 परां शांत्वं (D5 °तं) (for परं सान्त्वं). —b) K3. 5 V1 B Da Dn1. n3 D2-5. 7. 8 S (G3. 4 absent) स (B0. 3 D5 तु) मूषिकः. —c) K3. 5 V1 B1 Da Dn1. n3 D2. 3. 8 पर-मंत्रज्ञः; B2 परमप्रज्ञः (for °मार्थज्ञः).

129 Before 129, D4 ins. मूषिक उवाच. —a) K5 Dn3 D2. 4. 8. 9 सत्यं (for सर्वं). —b) Ś1 K1. 2. 4 D1. 4. 7 T1 G1. 2. 5 M2-4 रोमश; V1 लोमस (for लोमश). K3 श्रुते (for श्रुतम्). —d) D1 शृणव (sic). T2 तत् (for यत्). K5 Dn3 D2. 3. 8. 9 मे; Dn1 M2 वै; T G5 M1. 3. 4 मा (for माम्).

130 a) D4 G2 विदितव्यानि. —b) K3. 5 Dn1. n3 D2-4. 8. 9 विज्ञेयाश्च; D7 बोद्धव्यं (for बोद्धव्याश्च). V1 B1 Da T2 G1 M4 चैव (for चापि). — V1 reads 130cd on marg. —c) G2 तस्मात् (for एतत्). V1 सूक्ष्मं हि; D5 सुसूक्ष्मो; G1 सुसूक्ष्म- (for सुसूक्ष्मं). B2 लोकेषु (for लोकेऽस्मिन्). —d) D7 S (G3. 4 absent) लक्ष्यते प्राज्ञसंमतैः (M2 °तः; M4 °त).

. 12. 5049
. 12. 138. 138
. 12. 138. 138

शत्रुरूपाश्च सुहृदो मित्ररूपाश्च शत्रवः ।
सान्त्विताास्ते न बुध्यन्ते रागलोभवशं गताः ॥ १३१
नास्ति जात्या रिपुर्नाम मित्रं नाम न विद्यते ।
सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ॥ १३२
यो यस्मिञ्जीवति स्वार्थं पश्येत्तावत्स जीवति ।
स तस्य तावन्मित्रं स्याद्यावन्न स्याद्विपर्ययः ॥ १३३
नास्ति मैत्री स्थिरा नाम न च ध्रुवमसौहृदम् ।
अर्थयुक्त्या हि जायन्ते मित्राणि रिपवस्तथा ॥ १३४
मित्रं च शत्रुतामेति कस्मिंश्चित्कालपर्यये ।
शत्रुश्च मित्रतामेति स्वार्थो हि बलवत्तरः ॥ १३५
यो विश्वसति मित्रेषु न चाश्वसति शत्रुषु ।
अर्थयुक्तिमविज्ञाय चलितं तस्य जीवितम् ॥ १३६
अर्थयुक्तिमविज्ञाय यः शुभे कुरुते मतिम् ।
मित्रे वा यदि वा शत्रौ तस्यापि चलिता मतिः ॥१३७

---

131 V1 om. 131$^{ab}$. — $^{a}$) M2 -भूपाश् (for -रूपाश्). K3. 5 B Da Dn1. n3 D1–4. 7–9 S (G3. 4 absent) हि (for च). — $^{b}$) B1. 2. 5 Da D4 T2 हि (for च). — After 131$^{ab}$, D4 ins. line 1 of 313*.

— $^{c}$) K2 D1 सात्त्विकास्ते; K3 V1 B1. 2 Da संति तां- (Da2 वा)स्तु; K5 B4 D2. 3. 8 संधितास्ते; B0. 3. 5 Dn1. n3 संति तांस्ते; D5 संधितास्तान्; D7 T1 G1. 2. 5 M सांत्वितास्तु (for सान्त्वितास्ते). T2 न तु (for ते न). K4 वध्यंते; D4. 9 बुध्यंति (for बुध्यन्ते). — $^{d}$) K2. 5 Dn1. n3 D2–4. 9 कामक्रोध- (for रागलोभ-). Da -परायणः (for -वशं गताः). D5 रागलोभं च संगताः. — D4 ins. after 131$^{ab}$: D7 (reading twice) T G2. 5 M ins. after 131:

313* एषां सौम्यानि मित्राणि क्रोधनाश्चैव शत्रवः ।
सान्त्वितास्ते न बुध्यन्ते रागलोभवशं गताः ।

[ (L. 1) D4 M यस्य; T2 यानि; G2 येषां (for एषां). D4 चापि (for चैव). — (L. 2) = 131$^{cd}$. D4 om. line 2. T2 M1. 2 मित्रशत्रून् (for सान्त्वितास्ते). ]

132 $^{a}$) K5 Da Dn1. n3 D2. 3. 8 जातु (for जात्या). G1 नामा. K3 नास्ति मैत्री चिरं नाम. — $^{b}$) Da D4. 9 न मित्रं नाम (by transp.). K3 न च ध्रुवमसौहृदं (= 134$^{b}$). — $^{d}$) D5 शत्रवस् (for रिपवस्).

133 B1 D7 G2 M2 om. (hapl.) 133–134. V1 reads 133$^{a}$–135$^{b}$ on marg. — $^{a}$) Da2 जीविते; T2 जीवित- (for जीवति). Da सुखं; Dn1 D1 स्वार्थे (for स्वार्थं). — $^{b}$) D5 T1. 2 (*inf. lin.*) G1. 5 पश्यन्. K3. 5 Da Dn1. n3 D2. 3. 5. 8 T G5 M (M2 om.) पीडां न (Da स) जीवति; V1 B0. 2–5 D4. 9 पीडामजीवति. — $^{c}$) K3. 5 V1 B2 Da Dn1. n3 D2. 3. 8 transp. तावन् and मित्रं. D1 तव (for तावन्). — $^{d}$) T1 G5 यावन्नास्याद्.

134 B1 D7 G2 M2 om. 134 (cf. v. l. 133). V1 reads 134 on marg. — $^{a}$) V1 B2 चिरं; T G1. 5 M1. 3. 4 ध्रुवा (for स्थिरा). D9 नित्यं (for नाम). — $^{b}$) Ś1 K4 D1 नास्ति (for न च). D4. 9 स्थिरम् (for ध्रुवम्). — $^{c}$) Da D1. 4 T1 G5 अर्थ(D1 °थ)युक्ता (for °युक्त्या). K3. 5 Dn3 तु; D2. 3. 8 नु (for हि). Da2 हि जायंति; G1 [अ]भिजायंते (for हि जायन्ते).

135 V1 reads 135$^{ab}$ on marg. — $^{a}$) G2 मित्रश्च; M2 मित्रं त्वं (for मित्रं च). — $^{b}$) Da -पर्ययात् (for -पर्यये). — $^{d}$) D7 स्वार्थो.

136 $^{a}$) Ś1 K2. 3. 5 V1 B D3–5. 8. 9 G1 M2 विश्वसिति (for °सति). — $^{b}$) K2 V1 B D5 M2 चाश्वसिति; K3. 5 D4. 8. 9 विश्वसिति; Da1 विश्वशति (sic); Da2 Dn1. n3 D2. 3 विश्वसति (for चाश्वसति). — K2. 4 Dn3 D1–3. 8 om. (hapl.) 136$^{cd}$. — $^{c}$) Da G1 अर्थयुक्तम्; D5 मित्रयुक्तिम्. — $^{d}$) M2 जीवनं. B4 चलं तस्य च जीवितं.

137 V1 B0. 1 om. (hapl.) 137$^{ab}$. — $^{a}$) K3 अर्थे (for अर्थ-). K4 Da2 अर्थयुक्तम्. K5 D4 अवज्ञाय. — $^{b}$) D5 om. from यः शुभे up to विश्व (of विश्वसेत् in 138$^{b}$). K5 B2 Da Dn1. n3 D2. 3. 8 प्रीतौ (for शुभे). K3. 5 B2–5 Da Dn1. n3 D2–4. 8. 9 T G1. 5 M4 मनः; D7 मतिः (for मतिम्). — $^{c}$) D1 मित्रं (for मित्रे). M1–3 [अ]मित्रे (for शत्रौ). — $^{d}$) T2 G1 वा (for [अ]पि). Ś1 K1. 2. 4 गतिः (for मतिः).

138 = (var.) Ādi, App. I (No. 81), lines 125–126: 5. 38. 9: 12. 137. 25; 138. 43: Harivaṁśa 1. 20. 23; Pañcatantra 2. 43; 4. 14. D5 om. up to विश्व (cf. v. l. 137). — $^{b}$) K2. 3. 5 V1 B Da Dn1. n3 D2. 3. 7. 8 T G1. 2. 5 M1. 3 नाति-; M4 च न (for ऽपि न). B1 D9 विश्वसे (for °सेत्). — $^{c}$) Ś1 K2. 4 Da T2 G1 विश्वस्ताद् (for विश्वा-

न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ १३८
अर्थयुक्त्या हि दृश्यन्ते पिता माता सुतास्तथा ।
मातुला भागिनेयाश्च तथा संबन्धिबान्धवाः ॥ १३९
पुत्रं हि मातापितरौ त्यजतः पतितं प्रियम् ।
लोको रक्षति चात्मानं पश्य स्वार्थस्य सारताम् ॥१४०
तं मन्ये निकृतिप्रज्ञं यो मोक्षं प्रत्यनन्तरम् ।
कृत्यं मृगयसे कर्तुं सुखोपायमसंशयम् ॥ १४१
अस्मिन्निलय एव त्वं न्यग्रोधादवतारितः ।
पूर्वं निविष्टमुन्माथं चपलत्वान्न बुद्धवान् ॥ १४२
आत्मनश्चपलो नास्ति कुतोऽन्येषां भविष्यति ।
तस्मात्सर्वाणि कार्याणि चपलो हन्त्यसंशयम् ॥१४३
ब्रवीति मधुरं कंचित्प्रियो मे ह भवानिति ।
तन्मिथ्याकरणं सर्वं विस्तरेणापि मे शृणु ॥ १४४
कारणात्प्रियतामेति द्वेष्यो भवति कारणात् ।
अर्थार्थी जीवलोकोऽयं न कश्चित्कस्यचित्प्रियः ॥१४५
सख्यं सोदरयोर्भ्रात्रोर्दम्पत्योर्वा परस्परम् ।
कस्यचिन्नाभिजानामि प्रीतिं निष्कारणामिह ॥ १४६ C. 12. 5664 B. 12. 138. 153 K. 12. 138. 153

---

साद्).. — d) B1.3 D5 मूलादपि (for °न्यपि). B3 निकृंतयेत्; G1 न कृतंति. K1.3.5 B2 Dn1.n3 D2.3.7.8 T1 G2.5 M2.4 अपि मूलानि (K1 Dn3 °लान्नि-; M2.4 °लं नि-) कृंतति; M1.3 समूलमपि कृंतति.

139 a) D7.9 T1 G2.5 अ(D9 स्वा)र्थयुक्ता (for अर्थयुक्त्या). K2.3.5 B1.2 Dn1.n3 D2.3.8 जायंते (for दृश्यन्ते). Da अनुरक्ता हि ते तात. — b) D2 om. माता. Ś1 K4 Dn1.n3 D2–4.8 T G1.5 सुतस् (for सुतास्). — c) G1 मातुल्या (sic). K4 भागिनीयाश्च; D1 भगिने°.

140 b) Dn3 प्रियतः; D5 परमं; D9 पितरं (for पतितं). D4 सुतः (for प्रियम्). — c) D5 लोके. K3 V1 B1.2 Da D4.7 S (G3.4 absent) आत्मानं रक्षते (K3 °क्षितो; M1–3 °क्ष्यते) लोकः (K3 °के). — d) B1 M2 पश्यन् (for पश्य). Bo रक्षतां (for सारताम्). K3 पश्यत्स्वार्थसारता (sic).

141 =(var.) 161. — a) D1 तमन्यो (for तं मन्ये). K1.2.4 D1 निकृतप्रज्ञो (for °तिप्रज्ञं). K3.5 V1 B Da Dn1.n3 D2.8 सामान्या निष्कृतिः प्राज्ञ (Bo प्राज्ञो; B1 प्रज्ञ); D4 S (G3.4 absent) संमन्ये (D4 अबुद्ध्या; T2 M1.3.4 स मन्ये; G2 सामान्ये; M2 स मान्य-) निकृतिप्रज्ञो (T G2.5 M1 °ज्ञे); D7 समभ्येति कृतप्रज्ञो. — b) K5 Da Dn1.n3 D5.7–9 S (G3.4 absent) यो मोक्षात्; D4 मोक्षस्य (for यो मोक्षं). Dn3 om. तरम्. D1 प्रात्यनंतरं; D7 T2 G1 समनंतरं (for प्रत्यनन्तरम्). — c) K3.5 Dn3 कृतं; D4 भक्ष्यं (for कृत्यं). Ś1 K1.2.4 D1 गमयते; K5 D2.3.9 T G1.2.5 M2 मृगयते (for °यसे). Dn3 शत्रुं; D4 नूनं (for कर्तुं). — d) Dn3 सुखोपाये. Dn3 D4 न संशयं; G2 असंशयः.

142 a) D7 T G1.2.5 तस्मिन्. T1 G2.5 एवं च (for एव त्वं). D4 भक्ष्यार्थमेव तावत्त्वं; D5 अस्मिन्निलयमेकत्वं; M2 °न्विलयपादत्वं. — b) K3 V1 B Da Dn3 D5 अवतारितं; D4 अभिधावितः; D7 T G1.5 अवपातितः; M °पाश्रितः (for °तारितः). D9 न्यग्रोधाधिगतस्थितः. — c) D4 पूर्वं. Bo निर्दिष्टम् (for निविष्टम्). K3 T2 उन्मादं (for उन्माथं). — d) T1 G2.5 अबुद्धवान् (for न बुद्ध°). Da चापलान्नावबुद्धवान्.

143 a) Da च परो; Cv चपले (for चपलो). — b) Dn1 भविष्यसि. — d) Da1 चापलो. K3 D9 असंशयः; K4 संशयं (for असंशयम्). D5 चापले नास्त्यसंशयः.

144 a) K1 ब्रवीमि. D1 किंचित्. K3.5 V1 B Da Dn1.n3 D2–5.7–9 S (G3.4 absent) ब्रवीषि मधुरं यच्च. — b) K1 D7 G1 M मे हि; K3 T G2.5 मेसि; K5 V1 B Da Dn1.n3 D2.3.5.8 मेद्य; D4.9 मम (for मे ह). Da1 भविष्यसि (for भवानिति). — c) V1 B D9 -कारणं; D4 -द्वारणं (for -करणं). Bo मोक्षं (for सर्वं). K1 D7 S (G3.4 absent) तं मिथ्याकारणं सर्वं; K3 Da Dn1.n3 तन्मित्रका(Dn1.n3 °क)रणं सर्वं. — d) D7 T G1.2.5 M2–4 हि (for [अ]पि).

145 a) D1 करणात्. — Dn3 om. 145c–146d. K3 D4.9 read for the first time 145cd after 104ab. — c) K4 अर्थार्थे. — D9 (first time) om. 145d. — d) M2 प्रियं.

146 Dn3 om. 146 (cf. v. l. 145). — a) V1 Bo.3–5 D5 सखे; B1 संख्यं; B2 सख्योः (sic); M2 संख्याः (for सख्यं). K2.5 V1 B Da Dn1 D2–4.7.8 T G2.5 M2 सो(Da1 सौ)दर्ययोर् (for सोदरयोर्).

C. 12. 5064
B. 12. 138. 153
K. 12. 138. 154

यद्यपि भ्रातरः क्रुद्धा भार्या वा कारणान्तरे ।
स्वभावतस्ते प्रीयन्ते नेतरः प्रीयते जनः ॥ १४७
प्रियो भवति दानेन प्रियवादेन चापरः ।
मन्त्रहोमजपैरन्यः कार्यार्थं प्रीयते जनः ॥ १४८
उत्पन्ने कारणे प्रीतिर्नास्ति नौ कारणान्तरे ।
प्रध्वस्ते कारणस्थाने सा प्रीतिर्विनिवर्तते ॥ १४९
किं नु तत्कारणं मन्ये येनाहं भवतः प्रियः ।
अन्यत्राभ्यवहारार्थात्तत्रापि च बुधा वयम् ॥ १५०
कालो हेतुं विकुरुते स्वार्थस्तमनुवर्तते ।
स्वार्थं प्राज्ञोऽभिजानाति प्राज्ञं लोकोऽनुवर्तते ॥ १५१
न त्वीदृशं त्वया वाच्यं विदुषि स्वार्थपण्डिते ।
अकालेऽविषमस्थस्य स्वार्थहेतुरयं तव ॥ १५२
तस्मान्नाहं चले स्वार्थात्सुस्थितः संधिविग्रहे ।
अभ्राणामिव रूपाणि विकुर्वन्ति क्षणे क्षणे ॥ १५३

— d) Bo. 3–5 D5 अहं (for इह). G2 प्रीतिर्निष्कारणादिह.

147 a) Da क्रूरा (for क्रुद्धा). — b) D6 च (for वा). K4 corrupt. — d) Bo. 4. 5 transp. नेतरः and प्रीयते. D5 om. from प्रीयते up to कारणे (in 149a). D7 S (G3. 4 absent) प्राकृतो (for प्रीयते).

148 D1 (hapl.). 5 om. 148 (for D5, cf. v. l. 147). — a) M2 भवंति. — b) B2 वा परः; Da1 चापरे; D4 वा पराः (for चापरः). T2 G1 प्रियो वाचा तथापरः. — c) K2 सत्रहोम-; D9 मंत्रहोमैर्; M4 मंत्रहोमं (for मन्त्रहोम-). T2 अन्यैः (for अन्यः). — d) Bo. 5 Da1 D9 T2 M कार्यार्थी; D7 T1 G2. 5 कार्यार्थे (for कार्यार्थं). B5 Da Dn3 D7 M2 प्रियते (sic) (for प्रीयते).

149 D5 om. up to कारणे (cf. v. l. 147). — a) K3. 5 B4 Da Dn1. n3 D2. 3. 7. 8 T G1. 2. 5 M1–3 उत्पन्ना; Da °न्न- (for °न्ने). D7 T1 G1. 2. 5 कारणात् (for °णे). — b) B2 नः (for नौ). K3. 5 B4 Dn1. n3 D2–4. 7–9 S (G3. 4 absent) आसीन्नौ (G1 M2 °न्नो) (for नास्ति नौ). V1 B (except B4) Da D9 T G2. 5 M1. 3 कारणांतरं. — c) K2 प्रध्वस्थे; Dn1. n3 D2. 3. 8 प्रशस्ते; D1 प्रश्वस्ते; D5 प्रतच्चे (for प्रध्वस्ते). M2 कारणे स्थाने. — d) D4 हि विवर्तते; D7 S (G3. 4 absent) नाभिवर्ध(M1–3 °र्त)ते (for विनिवर्तते).

150 D8 om. (hapl.) 150a–151b. — a) K (except K4) B1 Da Dn1. n3 D2–4 तु (for नु). — b) M2 भवति (for भवतः). — c) K3 [अ]भ्यवहारार्थं; K4 °हारार्था; V1 Bo. 2–5 Da Dn1. n3 D1–4. 9 °हारार्थं; T1 G1. 5 M2 °हार्यार्थात् (for °हारार्थात्). K1 B1 अन्यत्र (B1 °त्रा) व्यवहारार्थात् (B1 °र्थं); K5 अन्यथाभ्यवहारार्थं (sic); T2 अन्यथाभ्यवहार्यार्थं. — d) K1 बहुधा (for च बुधा).

151 D8 om. 151ab (cf. v. l. 150). — a) Dn3 हंतुं (for हेतुं). — b) B1 अर्थिस् (for स्वार्थस्). K1 स्वार्थमप्यनुवर्तते. — c) B1 स्वार्थं; D7 स्वार्थान्. D7 T G2. 5 प्राज्ञा. D4. 9 T2 G1 M विजानाति; D7 T1 G2. 5 विजानंति (for ऽभिजानाति). — d) D7 T G5 प्राज्ञान् (for प्राज्ञं). Ś1 K2. 4 D1 लोकश्च; B1 लोकेनु- (for लोकोऽनु-). T2 G1 -मन्यते (for -वर्तते). K1 प्राज्ञो लोकश्च वर्तते.

152 Dn3 om. 152a–153b. — a) K3 V1 B1. 2 Da तन्नेदृशं; K4 D7 न त्वादृशं; G2 न हीदृशं (for न त्वीदृशं). B3 D5 मया (for त्वया). B2 Dn1 D3. 8 वाक्यं (for वाच्यं). — b) K2. 4 B1. 5 D1 -पंडित. B2 Da D4. 7. 9 S (G3. 4 absent) विद्यते (D4 °द्विष्टं; D9 °दुष्टः) स्वार्थपंडितः (D4 °तं). — c) K (except K1) V1 B Da Dn1 D1–3. 5. 7. 8 S (G3. 4 absent) अकाले (B1 D7 T G1. 2. 5 M2 °लो) हि समर्थ(K2 D1 M4 °स्थ)स्य; D4 न कालो हि समर्थस्य; D9 अकाले हि समुत्थस्य. — d) K1. 5 V1 B Da Dn1 D2–4. 7–9 S (G3. 4 absent) स्नेहहेतुर् (for स्वार्थ°). K1 अहं (for अयं). K3 स्नेहे हेतुपरं तव.

153 Dn3 om. 153ab (cf. v. l. 152). — a) D4 तस्मिन् (for तस्मात्). D1 T2 G1 चलः; M2 चलेत्; M4 त्यजे (for चले). B3–5 D5 स्थानात्; M4 स्वार्थान् (for स्वार्थात्). K3 V1 B1. 2 Da तस्माच्च विचलेत्स्वा- (K3 Da °ले स्वा-; B1 °लेद्)र्थात्. — b) K1 स्वस्तितः; K5 V1 Bo–2 Da Dn1 D2. 3. 8 M1–3 सुस्थिरः; D1 स्वस्थितः; D5 संस्थितः; T2 संधितः (for सुस्थितः). B5 संधिविग्रहः. — c) Ś1 K1. 2. 4 D1 अभ्राणीव हि; G2 अम्राणामिव (for अभ्रा°). — d) D7 S (G3. 4 absent) पदे पदे (for क्षणे क्षणे).

154 b) G1 पुनश्चैति (for °श्चैव). K5 V1 B Da Dn1. n3 D2. 3. 5. 8 मे सुहृत्; M1. 3 सौहृदः (for सौहृदम्). — c) M2 पुरश् (for पुनश्). D9 रिपुम्

अद्यैव हि रिपुर्भूत्वा पुनरद्यैव सौहृदम् ।
पुनश्च रिपुरद्यैव युक्तीनां पश्य चापलम् ॥ १५४
आसीत्तावत्तु मैत्री नौ यावद्धेतुरभूत्पुरा ।
सा गता सह तेनैव कालयुक्तेन हेतुना ॥ १५५
त्वं हि मेऽत्यन्ततः शत्रुः सामर्थ्यान्मित्रतां गतः ।
तत्कृत्यमभिनिर्वृत्तं प्रकृतिः शत्रुतां गता ॥ १५६
सोऽहमेवं प्रणीतानि ज्ञात्वा शास्त्राणि तत्त्वतः ।
प्रविशेयं कथं पाशं त्वत्कृतं तद्वदस्व मे ॥ १५७
त्वद्वीर्येण विमुक्तोऽहं मद्वीर्येण तथा भवान् ।
अन्योन्यानुग्रहे वृत्ते नास्ति भूयः समागमः ॥ १५८
त्वं हि सौम्य कृतार्थोऽद्य निर्वृत्तार्थास्तथा वयम् ।
न तेऽस्त्यन्यन्मया कृत्यं किंचिदन्यत्र भक्षणात् ॥ १५९
अहमन्नं भवान्भोक्ता दुर्बलोऽहं भवान्बली ।
नावयोर्विद्यते संधिर्वियुक्ते विषमे बले ॥ १६०
संमन्येऽहं तव प्रज्ञां यन्मोक्षात्प्रत्यनन्तरम् ।
भक्ष्यं मृगयसे नूनं सुखोपायमसंशयम् ॥ १६१
भक्ष्यार्थमेव बद्धस्त्वं स मुक्तः प्रसृतः क्षुधा ।
शास्त्रज्ञमभिसंधाय नूनं भक्षयिताद्य माम् ॥ १६२

C. 12. 5080
B. 12. 138. 169
K. 12. 138. 168

---

(for रिपुर्). — d) Dn3 G2 युक्तानां. K3 चापलं.

155 a) K1. 2. 5 V1 B Da Dn1. n3 D2. 3. 5. 7. 8 S (G3. 4 absent) आसीन्मैत्री तु (B4 °त्रीति) तावन्नौ (K1. 2 G2 तावन्नो; Da T2 G1 यावन्नौ). — c) M2 स्वागतं (for सा गता). T2 संगता सहितेनैव; G1 संगता सा हि तेनैव. — d) T2 कालो (for काल-).

156 a) K5 B2-4 Dn1 D2. 3. 8 जातितः; Da ह्यं· ततः; Dn3 जीवितः (for ऽत्यन्ततः). — D7 G2 om. (hapl.) 156cd. — c) G1 तन्मित्रम् (for तत्कृत्यम्). K3 D1 अभि(D1 °ति)निर्वर्त्तं; K5 Dn3 D2. 3. 8 °निर्वर्त्यं; D5 °निर्वृत्ति (for °निर्वृत्तं). — d) D5 प्रकृते; T G5 M2 प्रकृतिं; G1 प्राकृतीं (for प्रकृतिः). B1 D1 गताः; D5 T G1. 5 M2 गतः (for गता).

157 a) K1 Da2 D2. 3. 8 सोहमेव; T2 G1 एवमेवं (for सोऽहमेवं). Da प्रणेष्यामि; G2 प्रमाणानि (for प्रणीतानि). — b) M2 कार्याणि (for शास्त्राणि). — c) D7 S (G3. 4 absent) पार्श्वं; D9 पाशे (for पाशं). — d) K2 त्वत्कृत्यं; K3 तत्कृतं; K5 Da Dn1. n3 D2. 3. 5. 8. 9 M त्वत्कृते; G1 प्रकृतं (for त्वत्कृतं). D7 S (G3. 4 absent) तद् (M प्र) ब्रवीहि (for तद्वदस्व).

158 a) Dn3 तद्वीर्येण. K B3-5 Da2 Dn1. n3 D2. 4. 3. 9 M2 प्रमुक्तो; V1 B0-2 Da1 D3. 5 प्रयुक्तो (for विमुक्तो). M4 corrupt. — b) K3 वयं (for भवान्). — c) B1 वृत्तिर् (for वृत्ते). D5 अन्योन्यमावयोरेव. — d) D1 नास्ति भूया; D5 भूयो भूतः.

159 a) Ś1 K4 सोम्य (for सौम्य). K3 D4 [s]सि; D1 [s]स्य; D5 [s]हं (for ऽद्य). — b) K3-5 B1. 2 Da Dn1. n3 D1-5 निवृत्तार्थास्; T1 निर्वृत्तास्तास्; G1 निवृत्तार्थास् (for निर्वृत्तार्थास्). M2 निर्वृत्ताद्यास्तथाभवं (sic). — c) K3. 5 V1 B D (except D1; Dn2 D6 absent) तेस्त्यद्य; K4 तेस्ति निर् (for तेऽस्त्यन्यन्). D4. 9 कार्यं (for कृत्यं).

160 b) K1 B0. 3-5 D5 transp. भवान् and बली. D1 corrupt. — c) D9 नावयोरंतरं किंचिद्. — d) K4 D1 नियुक्तो; K5 B0. 3. 4 D3. 5. 7. 8 G2 विमुक्तो; Dn1 D2. 9 वियुक्तो; Dn3 T G1. 5 M विमुक्ते; D4 विगते (for नियुक्ते). K3 V1 B1. 2. 5 निर्वृत्ते कारणांतरे; Da निवृत्तं भक्षणांतरे.

161 a) K1. 2. 5 V1 B Da Dn1. n3 D2-5. 8 सम-(K1 °मा)न्येहं (for संमन्येऽहं). D1 प्राज्ञा. D9 मन्येहं त्वां महाप्राज्ञं; M सामान्येयं तव प्रज्ञा. — b) K5 D2. 3. 5 मोहात् (for मोक्षात्). T2 G1 समनंतरं (for प्रत्य°). — c) Dn1 D7. 9 S (G3. 4 absent) भक्ष्यं. K3. 5 B4 Dn1 D2. 3. 8 प्रशंससे; V1 B1. 2 Da प्रयतसे; Dn3 प्रशंसते (for मृगयसे). — d) K3. 5 Dn1. n3 D2. 3. 8 सुखोपायेन कर्मणा; B4 सुखोपाये नसंशयं.

162 a) D9 भक्ष्यार्थे (for °र्थम्). K1 V1 B1. 2 ह्येव; B0. 3-5 Dn1. n3 D5. 9 ह्यव· (for एव). Dn1 तु (for त्वं). K3. 5 D2. 3. 8 भक्ष्या(K3 D3 °क्षा)र्थे त्वं ह्यबद्धस्तु (K3 विबद्धश्च); D7 S (G3. 4 absent) भक्षार्थी ह्येव सुव्यक्तं (D7 T1 G2. 5 °क्तो). — b) K5 संमुक्तः; B2 स युक्तः; B3. 5 (marg. as in text) संयुक्तः; D4 प्रमुक्तः; D7 S (G3. 4 absent) विमुक्तः (M4 °क्त·) (for स मुक्तः). K3 संवृतः; K5 Dn1. n3 D2-4. 8. 9 पीडितः; D7 प्रद्युतः; T2 प्रस्तुतः; G2 प्रसृता (for प्रसृतः). — c) K4 शस्त्रज्ञम् (for शास्त्रज्ञम्). K2 अभिमास्थाय; D4 अतिसंधाय (for अभि°). K3 V1 B Dn1. n3 D2. 3. 5. 8 शास्त्रजां (Dn3 °ज्ञा) मतिमास्थाय; D7 S (G3. 4 absent) शास्त्रजां (D7 T1 G2. 5 °ज्ञां; M2

. 12. 5080
. 12. 138. 169
. 12. 138. 169

जानामि क्षुधितं हि त्वामाहारसमयश्च ते ।
स त्वं मामभिसंधाय भक्ष्यं मृगयसे पुनः ॥ १६३
यच्चापि पुत्रदारं स्वं तत्संनिसृजसे मयि ।
शुश्रूषां नाम मे कर्तुं सखे मम न तत्क्षमम् ॥ १६४
त्वया मां सहितं दृष्ट्वा प्रिया भार्या सुताश्च ये ।
कस्मान्मां ते न खादेयुर्हृष्टाः प्रणयिनस्त्वयि ॥ १६५

नाहं त्वया समेष्यामि वृत्तो हेतुः समागमे ।
शिवं ध्यायस्व मेऽत्रस्थः सुकृतं स्मर्यते यदि ॥ १६६
शत्रोरन्नाद्यभूतः सन्क्लिष्टस्य क्षुधितस्य च ।
भक्ष्यं मृगयमाणस्य कः प्राज्ञो विषयं व्रजेत् ॥ १६७
स्वस्ति तेऽस्तु गमिष्यामि दूरादपि तवोद्विजे ।
नाहं त्वया समेष्यामि निर्वृतो भव लोमश ॥ १६८

---

°तां) बुद्धिमास्थाय. —$^{d}$) K (except K5) V1 B Da D1.5 प्रातराशं (D5 °शां) चिकीर्षसि; D7 S (G3.4 absent) प्रातराश(G2 °शा)मिहेच्छसि.

163 $^{a}$) D4 त्वां च; D9 हि त्वम् (for हि त्वाम्). Da2 om. हि. K1 स; K3 V1 B Da1 D5.7 S (G3.4 absent) च; K5 Dn1.n3 D2.3.8 तु (for हि). —$^{b}$) D1 -समये; M1 -समयं. —$^{c}$) Dn3 तं (for त्वं). K1 Bo D7 T G2.5 M1.3.4 अतिसंधा(M4 °ध्या)-य. —$^{d}$) K5 V1 Da Dn1.n3 D3.4.7–9 S (G3.4 absent) भक्षं.

164 $^{a}$) Ś1 K1.2.4 D1 यश्चापि; K3.5 V1 B Da Dn1.n3 D2–5.8.9 M1.4 त्वं (D4 स्वं) चापि; D7 G2 किं चात्र; T1 G5 किं चाद्य; T2 संच्छाद्य; G1 संमाद्य; M2.3 यं (M3 त्वं) चाद्य (for यच्चापि). K3.5 Da Dn1.n3 D2.3.8 पुत्रदारस्थो; B3.4 D4 M1 °दारस्वं B4 M1 °स्त्वं); D1.7 T1 G1.2.5 °दारार्थं (D1 °स्त्वं); D9 सहदारश्च; T2 पुत्रदात्वं त्वं (sic) (for °दारं स्वं). —$^{b}$) V1 Bo.1 यत्सं-; D5 यस्त्वं (for तत्सं-). K1.4 तत्संविसृजसे; K3.5 B2–5 Da Dn1.n3 D2.3.8 यत्संधि सृजसे (D2.3.8 °ते); D4 damaged; D7 S (G3.4 absent) यद्वाणीं (D7 T2 M2 °त्पाणिं; G1 °द्वाणिं) सृजसे (for तत्संनिसृजसे). D9 सहपुत्रः सहबांधवः (hypermetric). —$^{c}$) G2 शुश्रूषुन् (for शुश्रूषां). K5 B4.5 Da Dn1.n3 D2.3.5.8.9 यतसे; D7 S (G3.4 absent) नार्हसे (for नाम मे). V1 तत् (for मे). K3 B3 शुश्रूषणां (K3 सुश्रूषणं) च मे कर्तुं; D4 शुश्रूषां मम कर्तुं वै. —$^{d}$) Da1 D5 सुखे (for सखे). K3 V1 Bo.1.3 Da D5 transp. मम and न. B2 तत्कृतं; D4 तद्धि ते; M4 तत्क्षणं (for तत्क्षमम्).

165 $^{a}$) D9 संहितं. —$^{b}$) Dn3 भार्यां (for भार्या). B1 सुतश्च; Da प्रियश्च (for सुताश्च). Ś1 K2.4 मे; K1.5 B1–5 Da Dn1.n3 D1–5.8.9 ते (for ये). —$^{c}$) D7 T G1.2.5 M2 तस्मात् (for क°). K1.5 B Da Dn1.n3 D2–5.8.9 ते (B2 च) मां न; D7 S (G3.4 absent) ते नैव (for मां ते न). K3 V1 ते कस्मान्मां न खादेयुर्. —$^{d}$) D7 T1 G5 स्पृष्टाः; T2 G1.2 स्पृष्ट्वा; M4 स्पृष्टः (for हृष्टाः). D7 S (G3.4 absent) प्रणयिनि (G1 °नी) (for प्रणयिनस्).

166 $^{a}$) D5 न हि (for नाहं). Dn1.n3 D2.3.8.9 सहे(D3.8 °है)ष्यामि (for समेष्यामि). — After $166^{a}$, D4 reads $168^{bc}$. —$^{b}$) B1 वृत्तौ हेतुः; Dn3 त्वत्तो हेतुः; D4.7 T G1.2.5 वृत्ते हेतु-; M वृत्ते (M2 °त्तेर्)-हेतौ (for वृत्तो हेतुः). — D4 om. $166^{c}$–$168^{a}$. D5 ins. 314* after $166^{ab}$ and om. (hapl.) $166^{c}$–$168^{d}$. —$^{c}$) K3 मित्रस्थः; B1 M2 मैत्रस्थः; Da2 Dn1.n3 D2.3 मे स्वस्थः; D7 T1 G2.5 तत्रस्थः; M4 मे त्रस्तः (for मेऽत्रस्थः). —$^{d}$) K3.5 V1 B1–3 Da Dn1.n3 D1–3.7–9 S (G3.4 absent) स्मरसे (for स्मर्यते).

167 D4.5 om. 167 (cf. v. l. 166). —$^{a}$) D7 -भूतं मां; M1–3 -भूतस्य (for °भूतः सन्). K3.5 V1 B Da Dn1.n3 D2.3.8 शत्रोरनार्यभूतस्य. —$^{b}$) Ś1 K1.2.4 D1 इष्टस्य (for क्लिष्टस्य). K1 तु (for च). —$^{c}$) K1.5 Dn1.n3 D3.7–9 S (G3.4 absent) भक्षं (for भक्ष्यं). Ś1 K1.2.4 D1 मृगयमानस्य (for °माणस्य). —$^{d}$) G2 कं (for कः). K4 D1 प्रज्ञो (for प्राज्ञो).

168 D4 om. $168^{a}$; D5 om. 168 (cf. v. l. 166). D4 reads $168^{bc}$ after $166^{a}$. —$^{b}$) D1.9 दूरस्थोपि; G1 आरादपि (for दूरादपि). M2 रूपादपि तलंबिले (sic). — D9 transp. $168^{cd}$ and $169^{ab}$. —$^{d}$) K1.2 Bo.5 D7 T1 G5 निर्वृत्तो; K3.5 V1 B1–4 Da Dn1.n3 D2.8.9 G1.2 निवृत्तो (for निर्वृतो). K1 D7.9 T G1.2.5 M2.4 रोमश (for लोमश). — K3.5 V1 B Da Dn1.n3 D2.3.8 ins. after 168: D5 after $166^{ab}$:

314* यदि त्वं सुकृतं वेत्सि तत्सख्यमनुसारय ।
विश्वस्तं वा प्रमत्तं वा एतदेव कृतं भवेत् ।

[(L. 1) Da Dn1 सुहृदं (for सुकृतं). K3 V1 Bo–3 Da Dn1 D5 मा मां (K3 मा मा; D5 मां मा) त्वम् (for

बलवत्संनिकर्षो हि न कदाचित्प्रशस्यते ।
प्रशान्तादपि मे प्राज्ञ भेतव्यं बलिनः सदा ॥ १६९
यदि त्वर्थेन मे कार्यं ब्रूहि किं करवाणि ते ।
कामं सर्वं प्रदास्यामि न त्वात्मानं कदाचन ॥ १७०
आत्मार्थे संततिस्त्याज्या राज्यं रत्नं धनं तथा ।
अपि सर्वस्वमुत्सृज्य रक्षेदात्मानमात्मना ॥ १७१
ऐश्वर्यधनरत्नानां प्रत्यमित्रेऽपि तिष्ठताम् ।
दृष्टा हि पुनरावृत्तिर्जीवतामिति नः श्रुतम् ॥ १७२
न त्वात्मनः संप्रदानं धनरत्नवदिष्यते ।
आत्मा तु सर्वतो रक्ष्यो दारैरपि धनैरपि ॥ १७३
आत्मरक्षिततन्त्राणां सुपरीक्षितकारिणाम् ।
आपदो नोपपद्यन्ते पुरुषाणां स्वदोषजाः ॥ १७४
शत्रून्सम्यग्विजानन्ति दुर्बला ये बलीयसः ।
तेषां न चाल्यते बुद्धिरात्मार्थं कृतनिश्चया ॥ १७५

C. 12. 5094
B. 12. 138. 163
K. 12. 138. 163

---

तत्सरूपम्). K5 V1 B0-4 Da Dn1 D5 अनुसारयेः (Dn1 D5 °ये).]

169 $^{a}$) M2 -संनिकृष्टो (for °कर्षो). — $^{b}$) D4 प्रशस्यति. — $^{c}$) B3.4 D3.7 प्रशांताद्; D5 प्रशंसाद् (for प्रशान्ताद्). K3 सुप्राज्ञैः; K5 V1 B0.2-5 Da Dn1 D2.3.5.8 मे पापाद्; Dn3 यत्तेषां; D4.9 च प्राज्ञैः; D7 S (G3.4 absent) हि प्रा(G1 प्र)ज्ञाद् (for मे प्राज्ञ). B1 प्रशांता बलिनोपांते.

170 $^{a}$) K5 B4 Dn1.n3 D2.3.8 स्वार्थं न; B0 त्वन्मेन (sic); D5 स्वार्थेन (for त्वर्थेन). K5 B Dn1.n3 D2.4.5.8.9 S (G3.4 absent) ते (for मे). — $^{b}$) D1 मे (for किं). — $^{c}$) K3 नु ते; V1 B1.2 Da तत्ते (for सर्वं). — $^{d}$) D9 चात्मानं (for त्वात्मानं). K1 V1 B Da D4.5.7.9 T G1.2.5 M4 कथंचन (for कदा°).

171 $^{a}$) D4.7.9 S (G3.4 absent) आत्मार्थं (for आत्मार्थे). M2 सततं (for संततिस्). — $^{b}$) Ś1 K2.4 धान्यं (for राज्यं). B1 अर्थं; D7 T1 G1.2.5 रत्न (for रत्नं). K1 धनास्तथा; K3.5 V1 B1.2 Da Dn1.n3 D2.3.8 S (G3.4 absent) धनानि च (for धनं तथा).

172 $^{a}$) D3 G1 ऐश्वर्यं. — $^{b}$) K3 प्रत्यमित्रेषु; T2 G1 °मित्रेति; M3 °मित्रोपि (for °मित्रेऽपि). K3 V1 B1.2 Da Dn1 D4.7 S (G3.4 absent) वर्ततां (for तिष्ठताम्). K5 Dn3 D2.3.8 प्राप्य मित्रे निवर्त्य(D2.3 °र्ते)तां; B0.3-5 प्रत्यमित्रे प्रतिष्ठितां (B4.5 °वर्ततां). — $^{c}$) K4 D5 T2 G1.2 M1.3.4 दृष्ट्वा (for दृष्टा). K1 G1.2 M1.3 आवृत्तिं. — $^{d}$) Ś1 K2.4 D1 जीवद्भिर्; K5 D9 जीवितम् (for जीव°). T1 G2.5 न (for नः). D7 श्रुतिः (for श्रुतम्). T2 G1 जीवतामिह (G1 °मेति) तच्छृणु.

173 $^{a}$) V1 Da चात्मनः (for त्वात्मनः). D1 संप्रधानं. — $^{b}$) D7 T1 G2.5 धनरत्नाद्विशिष्यते. — After 173$^{ab}$, Da1 reads 174$^{c}$–175$^{b}$. D5 om. (hapl.) 173$^{c}$–174$^{b}$. With 173$^{cd}$, cf. 5. 37. 17$^{cd}$. — $^{c}$) K1 B3 तु सर्वथा (B3 °दा); K3.5 V1 B1.2.4 Da Dn1.n3 D2-4.7.8 S (G3.4 absent) हि सर्वदा (D4 T1 G2.5 M °था) (for तु सर्वतो). D7 रक्षयेद्; D9 पोष्यो (for रक्ष्यो).

174 D5 om. 174$^{ab}$ (cf. v. l. 173). — $^{a}$) K3.5 V1 B Da Dn1.n3 D2-4.7-9 S (G3.4 absent) आत्मरक्षण- (Dn3 °णं) (for °रक्षित-). — $^{b}$) G1 सुपरीक्षत-. For the sequence in Da1, cf. v. l. 173. — $^{d}$) K1 सपत्नजाः (for स्वदोषजाः).

175 For the sequence in Da1, cf. v. l. 173. — $^{a}$) K1.3.5 V1 B Da Dn1.n3 D2.3.5.8 शत्रुं; D1 शत्रुः (for शत्रून्). D1 विजानाति. D7 S (G3.4 absent) शत्रुः सम्यगविज्ञातो (T2 G1 सर्वत्र विज्ञातो; M1.3 सम्यक्च विज्ञेयो; M4 सम्यक्च विज्ञातो). — $^{b}$) Dn3 दुर्बलाय. K3.5 V1 B Da Dn1.n3 D2.3.5.8 बलीयसं (Da °सा) (for °यसः). D7 S (G3.4 absent) विप्रियो ह्यबलीयसा. — After 175$^{ab}$, D7 S (G3.4 absent) ins.:

315* शङ्कनीयः स सर्वत्र प्रियमप्याचरन्सदा ।
कुलजानां सुमित्राणां धार्मिकाणां महात्मनाम् ।

[(L. 1) T2 M4 transp. शङ्कनीयः and स. D7 T1 G5 आचरत् (for °रन्). —(L. 2) G1 पुरुषाणां (for धार्मिकाणां).]

— $^{c}$) K1.3.5 V1 B Da Dn1.n3 D4.5.7-9 S (G3.4 absent) न तेषां (by transp.). B3 चान्यते; Da2 चल्यते; M4 चाप्यते (for चाल्यते). — $^{d}$) K3.5 V1 B Da Dn1.n3 D2-5.7-9 S (G3.4 absent) शास्त्रार्थ- (M1 °र्थं); K4 D1 आत्मार्थ- (for आत्मार्थं). D3 M4 -निश्चयाः; D4 -निश्चये; M1 -निश्चयं (for -निश्चया).

C. 12. 5094
B. 12. 138. 183
K. 12. 138. 184

इत्यभिव्यक्तमेवासौ पलितेनावभर्त्सितः ।
मार्जारो व्रीडितो भूत्वा मूषकं वाक्यमब्रवीत् ॥ १७६
संमन्येऽहं तव प्रज्ञां यस्त्वं मम हिते रतः ।
उक्तवानर्थतत्त्वेन मया संभिन्नदर्शनः ॥ १७७
न तु मामन्यथा साधो त्वं विज्ञातुमिहार्हसि ।
प्राणप्रदानजं त्वत्तो मम सौहृदमागतम् ॥ १७८

धर्मज्ञोऽस्मि गुणज्ञोऽस्मि कृतज्ञोऽस्मि विशेषतः ।
मित्रेषु वत्सलश्चास्मि त्वद्विधेषु विशेषतः ॥ १७९
तन्मामेवंगते साधो न यावयितुमर्हसि ।
त्वया हि याव्यमानोऽहं प्राणाञ्जह्यां सबान्धवः ॥ १८०
धिक्शब्दो हि बुधैर्दृष्टो मद्विधेषु मनस्विषु ।
मरणं धर्मतत्त्वज्ञ न मां शङ्कितुमर्हसि ॥ १८१

---

176 [a]) D1 अतिव्यक्तम्. K3.5 V1 B Da Dn1.n3 D2–5.8.9 T G5 M एवं स (for एवासौ). — [b]) K3–5 V1 B Da Dn1.n3 D2–5.8.9 T2 [अ]भिभर्त्सितः; D7 [अ]पभाषितः; T1 G1.2.5 [अ]पहासितः (for [अ]वभर्त्सितः). — [cd]) D5 [ऽ]वनतो; D7 T1 व्रीलितो; G2.5 M व्रीलितो (for व्रीडितो). K3.5 B0.3–5 Dn1.n3 D2.3.7–9 S (G3.4 absent) मूषिकं; V1 B1.2 Da पलितं; D5 मूखकं (for मूषकं). T2 G1 मार्जारो मूषिकं वाक्यं व्रीलितश्चेदमब्रवीत्. — After 176, K3.5 V1 B Da Dn1.n3 D2.3.5.8 ins.:

316* लोमश उवाच ।

सत्यं शपे त्वयाहं वै मित्रद्रोहो विगर्हितः ।

[ D5 सखे (for शपे). B2 मित्रद्रोही. K3 B1 हि गर्हितः (for विग°). ]

— K3 V1 B Da Dn1 D5 cont. (cf. 54[ab]):

317* सतां सप्तपदं मित्रं कथं त्वं मां न विश्वसेः ।

[ K3 साप्तपदं. K3 V1 B0 मैत्रं. V1 B0 मां त्वं (by transp.). B2 मा (for मां). B0 हि (for न). K3 कथं तस्मान्न विश्वसे (for the post. half). ]

177 [a]) K1 समान्ये; K3.5 Dn3 D2–4.8.9 तन्मन्ये; V1 Da Dn1 M1.2 स मन्ये; B0.3–5 न मन्ये; D5 नमस्ये; D7 संमान्ये (for संमन्ये). — [b]) T2 G1.2 M1.3.4 यत्त्वं (for यस्त्वं). — [d]) B0.3–5 संपन्न- (for संभिन्न-). K3 Dn1 -दर्शनं; K5 D2.3.8 -दर्शिनं; V1 Da1 -दर्शिनः (for -दर्शनः).

178 [a]) D4 भावं (for साधो). — [b]) D5 प्र- (for त्वं). K3 गृहीत्वम् (sic); K5 V1 B1.3.4 Da D2–5.8 G1.2 ग्रहीतुम्; B0.5 Dn1.n3 D7 T1 G5 M गृहीतुम्; B2 गर्हितुम् (for विज्ञातुम्). — [c]) K1 D9 प्राणप्रधानजं; D1 °प्रदानजे. K3 B1.2 Da साधो; Dn3 त्वत्तो; D1 त्वात्तो (for त्वत्तो). D5 प्राणप्रदानजीवंतो. — [d]) K1.3.5 B1–5 D (Dn2 D6 absent) S (G3.4 absent) मयि (for मम).

179 [a]) D4.5 M2 धर्मज्ञोसि. K2.4 D1 गुणी सोस्मि; D5 M2 गुणज्ञोसि (for गुणज्ञोऽस्मि). — [b]) D5 कृतज्ञोसि. — V1 reads 179[cd] on marg. — [c]) D5 चापि (for चास्मि). — [d]) K3.5 V1 B D (Dn2 D6 absent) S (G3.4 absent) त्व(M3 त)द्भक्तश्च (M4 °क्षश्च) (for त्वद्विधेषु).

180 B4 damaged. — [a]) B0.3–5 D7 T1 G2.5 त्वं (for तन्). B4 -गतो; T2 -विधे (for -गते). K3.5 V1 B1.2 Da Dn1.n3 D2.3.5.7.8 त(B1 क)स्मादेवं (K3 V1 B1.2 °न्नैवं; Da °न्मैवं; Dn3 °देवं) पुनः साधो. — [b]) K3 V1 B (B4 damaged) Da Dn1.n3 मां (B0.3.5 न) याचयितुम्; K5 D2.3.5.8 मय्या(D5 °या)चरितुम्; D4 न मां शंकितुम्; D7.9 T1 G2.5 न वाच(D9 याप)यितुम्; T2 G1 M न त्वं याचि(M1.4 °पि)तुम् (for न यावयितुम्). ❀ Ca: यावयितुं शङ्कितुम् । ❀ — G2 om. (hapl.) 180[c]–181[d]. — [c]) D4.7 T1 G6 [अ]पि; M4 नि- (for हि). K1.3.4 V1 B0.3–5 Da G1 याच्यमानो; K5 B2 Dn1.n3 D2.3.5.7.8 T1 G5 वाच्य°; D4.9 M याप्य° (for याव्य°). — [d]) K3.5 V1 B1.2 Da Dn1.n3 D2–4.8.9 T1 G5 M transp. प्राणान् and जह्यां.

181 G2 om. 181 (cf. v. l. 180). — [a]) K3.5 Dn1.n3 विश्रंभो; D1 धिक्तोदो (sic); D2.3.8 विस्रंभो (for धिक्शब्दो). D4 न (for हि). M2 हृष्टो (for दृष्टो). — [c]) K1 D4 सततं; K3 Dn3 D2.3.8 यदेतद्; K5 Dn1 तदेतद्; V1 B1.2 Da D7 T G1.5 M पतनं; B0.3.4 पतनाद्; B5 यतनाद्; D1 पारणं; D5 यतो हि (for मरणं). K1 D4 तत्त्व(D4 सर्व)धर्मज्ञ; Dn3 D5 धर्मतत्त्वज्ञे (D5 °ज्ञो) (for °तत्त्वज्ञ). — [d]) D4.9 मा (for न). K5 Dn1.n3 D2.3.8 त्वं; T1 G5 मे; M1.3.4 मा (for मां). D5 मयि शिक्षितुमर्हसि; D7 न मे शंसितुम्°.

182 [a]) D1 मां स्थूलमाणो; T2 G1 संमंत्र्यमाणो (for संस्तूयमानो). K3.5 V1 B D (Dn2 D6 absent) G2.5 M [ऽ]पि (for हि). — [b]) All MSS.

इति संस्तूयमानो हि मार्जारेण स मूषकः ।
मनसा भावगम्भीरं मार्जारं वाक्यमब्रवीत् ॥ १८२
साधुर्भवाञ्श्रुतार्थोऽस्मि प्रीयते न च विश्वसे ।
संस्तवैर्वा धनौघैर्वा नाहं शक्यः पुनस्त्वया ॥ १८३
न ह्यमित्रवशं यान्ति प्राज्ञा निष्कारणं सखे ।
अस्मिन्नर्थे च गाथे द्वे निबोधोशनसा कृते ॥ १८४
शत्रुसाधारणे कृत्ये कृत्वा संधिं बलीयसा ।
समाहितश्चरेद्युक्त्या कृतार्थश्च न विश्वसेत् ॥ १८५
तस्मात्सर्वास्ववस्थासु रक्षेज्जीवितमात्मनः ।
द्रव्याणि संततिश्चैव सर्वं भवति जीवतः ॥ १८६
संक्षेपो नीतिशास्त्राणामविश्वासः परो मतः ।
नृषु तस्मादविश्वासः पुष्कलं हितमात्मनः ॥ १८७
वध्यन्ते न ह्यविश्वस्ताः शत्रुभिर्दुर्बला अपि ।
विश्वस्तास्त्वाशु वध्यन्ते बलवन्तोऽपि दुर्बलैः ॥ १८८
त्वद्विधेभ्यो मया ह्यात्मा रक्ष्यो मार्जार सर्वदा ।
रक्ष त्वमपि चात्मानं चण्डालाज्जातिकिल्बिषात् ॥ १८९

C. 12. 5110
B. 12. 138. 199
K. 12. 138. 199

---

(except Ś1 K1-4 D1. 9; Dn2 D6 G3. 4 absent) मूषिकः. — c) K3 V1 B2 मनःस्वभाव- (for मनसा भाव-). K5 Dn1. n3 D2. 3. 8. 9 -गंभीरो. — d) D7 T G1. 2. 5 M1-3 इदम् (for वाक्यम्).

183 a) G2 वाग्भिः; M2 भावान् (for भवान्). K3 G2 M कृतार्थो (for श्रुता°). D1 साधुन्भावान्श्रुतार्थोसि (sic). — b) K3. 5 V1 B Da Dn1. n3 D2-4. 8. 9 T1 G2. 5 प्रि(B5 प्री)ये च; D5 प्रीये ते; D7 T2 G1 प्रियेपि (for प्रीयते). D4 तव; T1 G2. 5 न तु; T2 G1 च न (by transp.). Ś1 K1-4 विश्वसेत्; B5 °सेः (for विश्वसे). — c) K3 V1 B1. 2 Da संस्तवोघैर्; D1 स स्तवैर्वा; T2 संस्थवैर्वा. Ś1 K1. 2. 5 Dn1. n3 D2. 3. 9 T2 धनोघैर्; D8 धनोचैर् (for धनौघैर्). B1 च (for वा). — d) M2 शक्या. B2 Da D7 S (G3. 4 absent) त्वया पुनः (by transp.); D4 त्वया वशे. Dn3 तथा (for त्वया).

184 D5 om. 184ab. — a) K1. 5 V1 Bo. 1. 3-5 Da Dn1. n3 D2. 3. 8 ह्यमित्रे (K1 °त्रं); B2 त्वमित्रे. — b) B1 प्रज्ञा. D4 निष्कारणे. — c) D4 अर्थेश् (for अर्थे). K3 नि- (for च). G1. 5 गाथे; M4 नाथे (for गाथे). — d) K1 [उ]शसनादते; M1-3 [औ]शनसा कृते.

185 a) D5 तत्र; T G5 शत्रुः (for शत्रु-). Bo. 3-5 काले; D1 कृत्स्नः; D5 कार्ये (for कृत्ये). — b) G1 [अ]स्माकं (for संधिं). Da1 बलीयशा. — c) K3 B Da युक्तः; D7 S (G3. 4 absent) बुद्ध्या (for युक्त्या). D5 समाहितैश्च वै युक्तः. — d) D9 क्षतार्थस्य; T2 G1 M कृतार्थं च (for °र्थश्च). — After 185, K4. 5 V1 B Dn1. n3 D3. 7. 9 S (G3. 4 absent) ins.:

318* न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
नित्यं विश्वासयेदन्यान्परेषां तु न विश्वसेत् ।

[(L. 1) = 138ab. V1 B om. line 1. M1. 3 अविश्वासे. M1. 3 विश्वासे. D7 च न; D9 M2. 4 [ऽ]पि न; T1 G5 न च (for नाति-). — V1 reads from नित्यं up to त्मनः (in 186b) on marg. — (L. 2) M2 अन्यं. K5 Da Dn1 D2. 3. 8 न तु; Bo. 2 च न (for तु न). T2 G1 च (for तु). B1 om. न. B5 च (for न).]

186 V1 reads 186ab on marg. Da1 om. 186cd. — c) G1 संततश्; M2 सर्वतश् (for संततिश्). — d) Bo. 3. 4 जीवति; D5 जीवंति (for भवति). Dn1 D8 T2 G1 M2. 4 जीवितः; D7 T1 G2. 5 जीवतां (for जीवतः).

187 a) D1 संक्षेपे. — b) D5 न विश्वासः. D4 परस्परं; T2 G1 परं मतः; M1. 3. 4 परं मतं (for परो मतः). M2 विश्वासः परमा क्षितिः. — D1 reads 187cd twice. — c) D4 शृणु; G1 त्रिषु; G2 दृष्टं (for नृषु). — d) Ś1 K1. 2. 4 पुष्कलो; D9 दुष्करं (for पुष्कलं).

188 a) K1 Dn3 नैव (Dn3 न हि) विश्वस्ताः; D2. 3 न ह्यविश्वासाः (for न ह्यविश्वस्ताः). D4 वध्येत नैव विश्वस्ताः. — b) Ś1 K2-4 transp. शत्रुभिर् and दुर्बला. — c) K3. 5 V1 Bo. 3-5 Dn1. n3 D2-4. 8 तेषु; M2 चाशु (for त्वाशु). Ś1 बाध्यंते; Da1 बध्यंते; D1 वाध्यंते (for वध्यन्ते). D5 अविश्वस्तेषु वध्यंते. — d) K3 D4 बलवंता. V1 हि (for ऽपि). D7 S (G3. 4 absent) शत्रुभिः (for दुर्बलैः).

189 V1 om. 189ab. — b) B5 D4 M4 सर्वथा; G1 सर्वधा. — c) D4 रक्षं. — d) K3. 5 V1 B Da Dn1. n3 D2-5. 8. 9 चांडालाज्; G1 चंडाळाज्. K1. 4 Bo. 3 M2-4 जातकिल्बिषात्; D1 प्रतिकिल्बिषात्.

190 a) T2 G1 तस्य तु (for स तस्य). B2 Da वदतस्. K1 D1 T2 G1. 5 एव. — b) K1 त्रासादागत-;

C. 12. 5110
B. 12. 138. 199
K. 12. 138. 199

स तस्य ब्रुवतस्त्वेवं संत्रासाज्जातसाध्वसः ।
स्वबिलं हि जवेनाशु मार्जारः प्रययौ ततः ॥ १९०
ततः शास्त्रार्थतत्त्वज्ञो बुद्धिसामर्थ्यमात्मनः ।
विश्राव्य पलितः प्राज्ञो बिलमन्यज्जगाम ह ॥ १९१
एवं प्रज्ञावता बुद्ध्या दुर्बलेन महाबलाः ।
एकेन बहवोऽमित्राः पलितेनाभिसंधिताः ॥ १९२
अरिणापि समर्थेन संधिं कुर्वीत पण्डितः ।
मूषकश्च बिडालश्च मुक्तावन्योन्यसंश्रयात् ॥ १९३
इत्येष क्षत्रधर्मस्य मया मार्गोऽनुदर्शितः ।
विस्तरेण महीपाल संक्षेपेण पुनः शृणु ॥ १९४
अन्योन्यकृतवैरौ तु चक्रतुः प्रीतिमुत्तमाम् ।
अन्योन्यमभिसंधातुमभूच्चैव तयोर्मतिः ॥ १९५
तत्र प्राज्ञोऽभिसंधत्ते सम्यग्बुद्धिबलाश्रयात् ।
अभिसंधीयते प्राज्ञः प्रमादादपि चाबुधैः ॥ १९६
तस्मादभीतवद्भीतो विश्वस्तवदविश्वसन् ।
न ह्यप्रमत्तश्चलति चलितो वा विनश्यति ॥ १९७
कालेन रिपुणा संधिः काले मित्रेण विग्रहः ।
कार्य इत्येव तत्त्वज्ञाः प्राहुर्नित्यं युधिष्ठिर ॥ १९८

---

D7 श्रुत्वा संजात- ( for संत्रासाज्जात- ). D1 संत्रासाज्ञात-साश्वसः (sic). — c) K1 स बिलं हि; K3. 5 V1 B Da Dn1. n3 D2. 3. 8 शाखां हित्वा; D4 तत्र स्थित्वा; D5. 9 कथंचित्स; D7 T G1. 2. 5 M1. 3. 4 कथां श्रुत्वा (G1 हित्वा; G2 M1. 3 छित्वा; M4 जित्वा); M2 तथा जित्वा ( for स्वबिलं हि ). D1 [आ]स्त ( for [आ]शु ). — d) M3 मार्जारं ( sic ). B2 D7 G2 तदा ( for ततः ).

191 a) M1–3 एवं ( for ततः ). — b) K1 बृद्धि-; T2 M1 बुद्ध्या ( for बुद्धि- ). — c) Bo G2 विश्राव्यः; T2 विश्राम्य; M1 विश्रव्य ( for विश्राव्य ). G2 फलितः. D1 प्रज्ञो. — d) K3 D7 T1 G5 अन्यं.

192 a) K3 प्राज्ञावता; Da1 ज्ञानवता. — b) D1–4. 8 महाबलः; D7 T2 बलीयसः ( for महाबलाः ). — d) Bo. 4. 5 Da1 D5 [अ]भिसंहि( D5 °ज्ञि )ताः; D4. 7. 9 S ( G3. 4 absent ) [अ]तिसंधि( D7 T1 G5 °हि )ताः.

193 a) B2 Da वैरिणापि ( for अरिणापि ). D7 S ( G3. 4 absent ) [अ]समर्थेन. — b) D1 मध्यं ( for संधिं ). K5 Da1 D4. 9 कुर्वंति ( for कुर्वीत ). K5 D4. 9 पंडिताः. — c) K3. 5 V1 B Da1 Dn1. n3 D2–4. 7. 8 S ( G3. 4 absent ) मूषिकश्च; Da2 मूखकश्च; D5 मूखिकश्च (for मूषकश्च). T1 G1. 2 बिलाळश्च; G5 बिडाळश्च; M विलाळश्च ( for बिडालश्च ).

194 a) V1 B1. 2 Da इत्येवं; Dn3 इत्येव; M4 इत्येतत् ( for इत्येष ). K5 Dn1. n3 D2. 3. 8 क्षत्रधर्मश्च. — b) K1 मार्गस्तु; K5 Dn1. n3 D2. 3. 8 मार्गेषु; B5 संगोनु-; D1 मार्गो न; D5 मार्गोत्र; G1 मार्गो नि-. — c) K3. 5 V1 B1. 2. 4 Da Dn1. n3 D2. 3. 5. 8 महाराज ( for महीपाल ). — d) D9 संक्षेपेन. K3. 5 V1 B1. 2 Da Dn1. n3 D2. 3. 8 संक्षेपमपि मे शृणु.

195 a) D1 -वैरात् ( for -वैरौ ). V1 B Da D4. 9 तौ ( for तु ). D7 S ( G3. 4 absent ) अन्योन्यं ( M1. 3 °न्य- ) कृत्यवंतौ ( T2 G1 M2 कृतवंतौ; M1. 3. 4 कृतसंधी ) तौ. — b) Da रक्षतुः; D7 S ( G3. 4 absent ) जग्मतुः ( for चक्रतुः ). D1 उत्तमं. — K3 om. ( hapl. ) $195^{c}$–$196^{b}$. — c) D2 अपि; D4 चाभि-; D9 चापि; M4 अति- ( for अभि- ). — d) K5 V1 B2 Da Dn1 D2. 3. 8 संबभूव ( for अभूच्चैव ).

196 K3 om. $196^{ab}$ (cf. v. l. 195). — a) Bo D1 ततः; D7 T1 G2. 5 अत्र ( for तत्र ). Ś1 K1. 2. 4 D1 [ऽ]नुसंधत्ते ( D1 °त्तो ); D5 [ऽ]भिसंधातुं; G1 M [ऽ]तिसंधत्ते ( for ऽभि° ). — b) D5 स स्व- ( for सम्यग् ). K5 V1 B1. 2 Da Dn1. n3 D2. 3. 8 बुद्धिसमाश्रयात्; D4 बुद्धिः परा° ( for बुद्धिबला° ). — c) K3 Bo. 3–5 अपि संधीयते; V1 B1 Da तथाभिसंध्य( Da1 °ध )ते; B2 D7 S ( G3. 4 absent ) तथाति( B2 °पि )संध्यते ( G1 °सज्जते ); D1 अभि*धीयतो ( for अभिसंधीयते ). K3 प्राज्ञाः; B2 T2 प्राज्ञ ( for प्राज्ञः ). — d) K1 वायुधैः; K3. 5 V1 B D ( except D9; Dn2 D6 absent ) G1 M1–3 वाबुधैः ( for चाबुधैः ).

197 b) B2 Dn3 D7 G2 M2 अविश्वसेत् ( for °सन् ). — After $197^{ab}$, D5 reads $203^{c}$–$204^{b}$. — c) D7 S ( G3. 4 absent ) चलते. — d) K1 चलिता च. V1 B1. 2. 5 Da2 D4. 9 M1 [अ]पि नश्यति; Da1 [अ]पि निश्चितः; T1 *नश्यति; T2 G1. 2. 5 M4 न नश्य( T2 °स्य )ति ( for विनश्यति ).

198 a) D4. 9 T G2. 5 M काले हि ( for कालेन ). — b) Ś1 K2. 4 मित्रेषु ( for मित्रेण ). — c) Bo D5 कार्यम्; D4 काल ( for कार्य ). D4. 9 इत्यर्थ- ( for इत्येव ). K3. 5 V1 B1. 2 Da Dn1. n3 D2. 3. 8 संधिज्ञाः; D1 तत्त्वज्ञ

एवं मत्वा महाराज शास्त्रार्थमभिगम्य च ।
अभियुक्तोऽप्रमत्तश्च प्राग्भयाद्भीतवच्चरेत् ॥ १९९
भीतवत्संविधिः कार्यः प्रतिसंधिस्तथैव च ।
भयादुत्पद्यते बुद्धिरप्रमत्ताभियोगजा ॥ २००
न भयं विद्यते राजन्भीतस्यानागते भये ।
अभीतस्य तु विस्रम्भात्सुमहज्जायते भयम् ॥ २०१
न भीरुरिति चात्यन्तं मन्त्रोऽदेयः कथंचन ।
अविज्ञानाद्धि विज्ञाते गच्छेदास्पददर्शिषु ॥ २०२
तस्मादभीतवद्भीतो विश्वस्तवदविश्वसन् ।
कार्याणां गुरुतां बुद्ध्वा नानृतं किंचिदाचरेत् ॥ २०३
एवमेतन्मया प्रोक्तमितिहासं युधिष्ठिर ।
श्रुत्वा त्वं सुहृदां मध्ये यथावत्समुपाचर ॥ २०४
उपलभ्य मतिं चाग्र्यामरिमित्रान्तरं तथा ।
संधिविग्रहकालं च मोक्षोपायं तथापदि ॥ २०५

C. 12. 5125
B. 12. 138. 215
K. 12. 138. 214

---

(for तत्त्वज्ञाः). —$^{d}$) Bo मित्रं (for नित्यं). K3.5 V1 B1.2 Da Dn1.n3 D2.3.8 नराधिप (K3 °पाः) (for युधिष्ठिर).

199 $^{a}$) K3.5 V1 B Da Dn1 D2–5.8.9 एतज्ज्ञात्वा; Dn3 येन ज्ञात्वा; D7 S (G3.4 absent) एवं ज्ञात्वा (for एवं मत्वा). —$^{b}$) D4 G1 अधिगम्य; D9 अव-गम्य (for अभि°). —$^{c}$) D4 अनियुक्तो (for अभि°). K5 Dn1.n3 D2.3.8 प्रसन्नश्च; V1 प्रमत्तश्च (for ऽप्रम-त्तश्च). —$^{d}$) D5 प्रज्ञया; T2 प्राग्भवाद् (for प्राग्भ-याद्). B2 Da [आ]चरेत् (hypermetric) (for चरेत्).

200 V1 reads 200$^{a}$–201$^{b}$ on marg. —$^{a}$) K3.5 V1 Bo.1 Dn3 D2.3.8 संनिधिः; D7 G5 विहितः; T1 G5 (*inf. lin.*) विधितः; G1 सविधिः; G2 संहितः (for संविधिः). —$^{b}$) D4 वा (for च). —$^{c}$) D1 भवाद् (for भयाद्). Ś1 K1.4 प्रवर्तते (for उत्पद्यते). M4 om. बुद्धि. —$^{d}$) Ś1 K1.2.4 D1 अभिमता; D4 प्रयत्नाय (for अप्रमत्ता). K3.5 V1 B1.2 Da Dn1.n3 D2.3.8 [अ]भि(Dn3 वि)योगतः; D7 T1 G2.5 M4 हि योगजा (for [अ]भियो°).

201 V1 reads 201$^{ab}$ on marg. —$^{a}$) D7.9 S (G3.4 absent) जायते (for विद्यते). —$^{b}$) K1 [अ]-प्यागते; D5 [अ]पि गते; T2 [अ]नुगतो. —$^{c}$) T2 G1 अहितस्य (for अभीतस्य). K5 Da Dn1.n3 D2–4.8.9 च; B2 lacuna (for तु). Ś1 K2.4 विस्रब्धात्; K3.5 V1 B1.2 Dn1.n3 D3.4.9 विश्रंभात्; Bo.3–5 (marg. as in text) D5 संरं(Bo °र)भात्; Da विश्वस्तात्; D1 विस्रग्धात् (for विस्रम्भात्). —$^{d}$) D7 अभिसंजायते भयं.

202 K3 om. 202-203. —$^{a}$) B4 अभीरुर्. K4 V1 B (except B1) D5 चात्यर्थं. K5 Dn1.n3 D2–4.8.9 अभीश्चरति यो नित्यं; D1 नाभीदरिति चात्यंतो (sic). —$^{b}$) Da2 मित्रो (for मन्त्रो). D1 मंत्रे देयाः कथंचन (sic). —$^{c}$) K1 D4 अभि(D4 om. अभि)ज्ञानाद्धि; D1 अवज्ञानाद्धि; M4 अविज्ञाताद्धि. K5 B3 Dn1.n3 D2.3.5.8 T2 G1 विज्ञातो; B1 विज्ञा*; D7.9 T1 G5 विज्ञाने; G2 विज्ञानो (for विज्ञाते). V1 Bo.2.4.5 Da अविज्ञानादविज्ञातो (B2 °ते). —$^{d}$) D1.4.5.9 आपद- (for आस्पद-). D6.7 S (G3.4 absent) -दर्शनं (M1.3 °नः) (for -दर्शिषु).

203 K3 om. 203 (cf. v. l. 202). B4 damaged. —$^{a}$) D1 अभीतिवद्. —$^{b}$) B2.5 D4 T2 G1 अवि-(B2 °भि)श्वसेत्. K5 Dn3 D2.3.8 विश्वस्तं (K5 Dn3 °स्तो) बहु विश्वसन्. —For the sequence in D5, cf. v. l. 197. —$^{c}$) Bo.3.5 गूढतां (for गुरुतां). K5 B4 Dn1.n3 D2.3.8 प्राप्य; G2 बद्धा (for बुद्ध्वा). —$^{d}$) V1 B1.2 Da नाहितं; D4 नादितः; D7 S (G3.4 absent) नाहतः; D9 नात्यतः (for नानृतं).

204 For the sequence in D5, cf. v. l. 197. —$^{a}$) Ś1 K1.2.4 D1 एतं (for एतन्). —$^{b}$) K3 (*sup. lin.* as in text) T G1.5 पुरातनं (for युधिष्ठिर). —$^{c}$) D1 श्रुत्वातो. K3 V1 B1.2 Da [ए]तत्; Bo.4.5 तत्; M2 [अ]हं; M4 तं (for त्वं). K3 सुहृदो; M2 सुहृदं. —$^{d}$) K3 B5 समुपाचरेत् (B5 °रन्); D7 T1 G5 M समुदाचर; T2 G1 त्वं समाचर (for समुपाचर).

205 B5 om. 205$^{ab}$. —$^{a}$) G2 चाग्राम्. —$^{b}$) D4 अरिमित्राश्रितां; G1 °मित्रांतरस्. Bo.3.4 D5 अरि-मित्रार्थनिश्चयां. —$^{c}$) K3 -कालज्ञः; K5 Dn1.n3 D2.3.8 -काले; D7.9 S (G3.4 absent) -कालौ (for -कालं). —$^{d}$) K5 Dn1.n3 D2.3.8 मोक्षोपायस्. D4 om. from क्षो up to विश्वसेत् (in 206$^{d}$). K1 तथा यदि; K5 Dn1.n3 D2.3.8.9 तथैव च; Da1 सदापदि; Da2 सदा यदि (for तथापदि).

206 D4 om. 206 (cf. v. l. 205). B4 damaged. —$^{a}$) K3 कृत्वा (for कृत्वे). —$^{b}$) D5 om. from

C. 12. 5125
B. 12. 138. 215
K. 12. 138. 215

शत्रुसाधारणे कृत्ये कृत्वा संधिं बलीयसा ।
समागमं चरेद्युक्त्या कृतार्थो न च विश्वसेत् ॥ २०६
अविरुद्धां त्रिवर्गेण नीतिमेतां युधिष्ठिर ।
अभ्युत्तिष्ठ श्रुतादस्माद्भूयस्त्वं रञ्जयन्प्रजाः ॥ २०७
ब्राह्मणैश्चापि ते सार्धं यात्रा भवतु पाण्डव ।
ब्राह्मणा हि परं श्रेयो दिवि चेह च भारत ॥ २०८
एते धर्मस्य वेत्तारः कृतज्ञाः सततं प्रभो ।
पूजिताः शुभकर्माणः *पूर्वजित्या नराधिप ॥ २०९
राज्यं श्रेयः परं राजन्यशः कीर्तिं च लप्स्यसे ।
कुलस्य संततिं चैव यथान्यायं यथाक्रमम् ॥ २१०
द्वयोरिमं भारत संधिविग्रहं
सुभाषितं बुद्धिविशेषकारितम् ।
तथान्ववेक्ष्य क्षितिपेन सर्वदा
निषेवितव्यं नृप शत्रुमण्डले ॥ २११

इति श्रीमहाभारते शान्तिपर्वणि षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

---

संधिं up to युधिष्ठिर (in 207[b]). D9 संध्यं. — [c]) K1. 5 V1 Bo. 1. 3. 5 Dn1. n3 D2. 3. 9 T2 G1 M2 समागमे; D7 T1 G2. 5 M1 °हितश्; M3. 4 °हितं (for °गमं). B1 स्वस्थः; D7 S (G3. 4 absent) बुद्ध्या; D9 बुद्धा (for युक्त्या). B2 Da ततस्तु समवेक्षेत. — [d]) B1 कृतार्थे. D7 S (G3. 4 absent) च न (by transp.).

207 D5 om. 207[ab] (cf. v. l. 206). — [a]) K1 अविरुद्धा; T2 °रुध्यंस्; G1 M2 °रुद्धांस्. — [b]) D1 नीतिमतौ (for °मेतां). K3. 5 V1 B1. 2 Da Dn1. n3 D2. 3. 8 महीपते (for युधिष्ठिर). — [c]) K3 B3 D5 अभ्युत्तिष्ठेच्; Dn3 °त्तिष्ठेः; D1 यद्युत्तिष्ठ; D4 अभितिष्ठ; D9 अवितिष्ठ; M अनुतिष्ठ (for अभ्युत्तिष्ठ). D4. 5 शुभाद्; D9 स्वं तां (for श्रुताद्). D4. 7. 9 T G1. 2. 5 तस्माद् (for अस्माद्). — [d]) D1 भूयास्; D5 पुनः; M2 भूतः (for भूयस्). K3. 5 Dn1. n3 D2. 3. 8 संरक्षयन्; V1 Bo. 3–5 D4. 5. 9 T2 G1. 2 M1–3 संरंजयन्; B1. 2 Da D7 T1 G5 M4 संरंजय (for त्वं रञ्जयन्).

208 [a]) D4. 7 S (G3. 4 absent) चैव (for चापि). D5 तैः. D9 साध्वी (for सार्धं). — [c]) K2 ब्राह्मणादि; K3. 5 V1 B1. 2 Da Dn1. n3 D1–3. 8 ब्राह्मणा वै; D5 ब्राह्मणो हि; D7 S (G3. 4 absent) °णाद्धि. Dn3 परिश्रेयो; G1 परश्रेय (for परं श्रेयो). — [d]) K1 देहे; D4 वेद (for चेह). D7 S (G3. 4 absent) इह लोके परत्र च.

209 [a]) D5 धर्मश्च; M4 वै धर्म- (for धर्मस्य). — [b]) K1 कृतज्ञः. K3 नृपः; V1 B1. 2 Da नृप; D7 T G1. 2. 5 M4 विभो (for प्रभो). D4 पूजयेत्तान्नराधिप; D9 कृतप्रज्ञाः सुपूजिताः; M1–3 कृतज्ञाः पापनाशनाः. — [c]) D4. 9 सदैव (for पूजिताः). All MSS. (except Ś1 K1. 2. 4 D1; Dn2 D6 G3. 4 absent) शुभकर्तारः. — [d]) Ś1 पूर्वजि*; K1 पूर्वजितो; K2. 4 D1 पूर्वमेव; K3. 5 Da Dn1. n3 D2. 9 पूजयेत्तान्; V1 B1. 2 D3. 7. 8 पूजयैतान्; Bo. 3–5 T G1. 2. 5 M1–3 पूजयैनान्; D5 पूजयैनं (for *पूर्वजित्या). K3 D5 नराधिपः (D5 °पं); D7 T1 G1. 2. 5 M1–3 जनाधिप (for नराधिप). D4 सदेवं शुभवाचकः; M4 पूजयैनात्मनाधिप.

210 [a]) M2. 3 राज्ञां (for राज्यं). B2 राज्यमर्थं परं चापि. — [b]) K5 Dn3 D8 कीर्तिंश्; M2 कीर्तिंर् (for कीर्तिं). Dn3 च लभ्यते; D4 च लिप्स्यसे; M बलं धनं (for च लप्स्यसे). D7 T G1. 2. 5 यशश्च महदाप्स्यसे (T2 °सि). — [c]) D7 T1 G5 M1. 3 कुलं च (for कुलस्य). K3 संततं; M2 सत्कृतिं (for संततिं). — [d]) Ś1 K2 D1 यथा न्यायं. D4 यथाश्रुतं (for °क्रमम्). D7 S (G3. 4 absent) करिष्यं(T1 G5 M2 °ष्य)ति सुपूजिताः.

211 [a]) D7 S (G3. 4 absent) श्रुतं च ते (for द्वयोरिमं). D4 तयोर् (for द्वयोर्). B2 इदं (for इमं). B1 भवेत् (for भारत). M2 -विग्रह. — [b]) D4 G1 विभाषि(G1 °सि)तं; D7. 9 T G5 M विभावितं; G2 विभावितुं (for सुभाषितं). B4 भुवि; B5 भूरि-; D5 चैव (for- बुद्धि-). Dn1 -कारकं; G2 -कारितुं (for -कारितम्). — [c]) K1 तथा च वीक्ष्य; K3. 5 D (Dn2 D6 absent) तथा (Da1 Dn1. n3 D4. 9 यथा) त्ववेक्ष्य; V1 B1–4 तथानुवेक्ष्य (for तथान्ववेक्ष्य). T2 G1 तथान्ववेक्ष्येति (T2 °क्षेत) नृपेण. Ś1 K1 सर्वथा (for सर्वदा). — [d]) K3 V1 B Da Dn3 D4. 7 S (G3. 4 absent) शत्रुमंडलं; D5 °मंडपं (for °मण्डले).

# १३७

युधिष्ठिर उवाच ।

उक्तो मन्त्रो महाबाहो न विश्वासोऽस्ति शत्रुषु ।
कथं हि राजा वर्तेत यदि सर्वत्र नाश्वसेत् ॥ १
विश्वासाद्धि परं राज्ञो राजन्नुत्पद्यते भयम् ।
कथं वै नाश्वसन्राजा शत्रूञ्जयति पार्थिव ॥ २
एतन्मे संशयं छिन्धि मनो मे संप्रमुह्यति ।
अविश्वासकथामेतामुपश्रुत्य पितामह ॥ ३

भीष्म उवाच ।

शृणु कौन्तेय यो वृत्तो ब्रह्मदत्तनिवेशने ।
पूजन्या सह संवादो ब्रह्मदत्तस्य पार्थिव ॥ ४
काम्पिल्ये ब्रह्मदत्तस्य अन्तःपुरनिवासिनी ।
पूजनी नाम शकुनी दीर्घकालं सहोषिता ॥ ५
रुतज्ञा सर्वभूतानां यथा वै जीवजीवकः ।
सर्वज्ञा सर्वधर्मज्ञा तिर्यग्योनिगतापि सा ॥ ६

C. 12. 5138
B. 12. 139. 6
K. 12. 139. 6

---

Colophon. — *Sub-parvan:* Ś1 K Da2 Dn1. n3 D1-5. 9 आपद्धर्मः; V1 B2 D7 T2 G1. 2 M राजधर्मः; Bo. 4. 5 राजधर्मे आपत्सु; B1 Da1 राजधर्मे आपद्धर्मेषु; B3 आपत्सु. — *Adhy. name:* Ś1 K V1 B Da Dn1. n3 D2-4. 7 G2 M1-3 मार्जारमूष( K3. 5 V1 B Da Dn3 D2-4. 7 G2 M2. 3 °षि )कसंवादः; D9 मूषकसंवादः; M4 मूषिकमार्जारसंवादः. — *Adhy. no.* ( figures, words or both ): B1 138; B4 137; Da1 Dn1 8; D7 G1. 2 M 140; D8 6; T1 G5 141; T2 139. — *Śloka no.:* Da1 216; Dn1 220; Dn3 215; D8 226.

## 137

☞ With this adhy., cf. Harivaṁśa I. 20. 80ff., and the Kuntanī-jātaka ( No. 343 ).

1 [a] ) M2 उक्त्वा. D7 G2 महाराज ( for °बाहो ). — [b] ) K3. 5 V1 B1. 2. 5 Da Dn1. n3 D2. 3. 8 transp. न and विश्वासो. — D4 repeats 1[cd] after 3. — [c] ) B1 राजा हि ( by transp. ); D9 राज्ये हि. — [d] ) D2 नाश्वसन्.

2 K2 om. 2[ab]; D2 om. 2[abe]. — [ab] ) B2 वै ( for हि ). Bo. 3-5 महद् ( for परं ). K3-5 V1 B Da Dn1. n3 D3-5. 7. 8 T G1. 2. 5 M राजन्राज्ञाम्; D9 राज्ञां महद् ( for राज्ञो राजन् ). K4 उत्पाद्यते. ❀ Cv: विश्वासाद्धि परं राजन्निति पाठे विगतः श्वासः आश्वासः तस्मात् । ❀ — B1 om. 2[c]-3[d]. — [c] ) K3. 5 B3. 4 Dn1. n3 D3. 8 हि; D9 च ( for वै ). Ś1 K1. 2. 4 D1 नाश्वसेद्; D9 [अ]विश्वसन् ( for नाश्व° ). Da1 राजन्. — [d] ) K3 V1 Bo D5 T2 G1 M1. 2. 4 शत्रुं. K1. 3. 5 B3 Da Dn1. n3 D2-5. 7-9 T1 G5 M1-3 पार्थिवः.

3 B1 om. 3 ( cf. v. l. 2 ). — [a] ) Ś1 K1. 4 D1 M1. 3 एतं; D9 एवं ( for एतन् ). K1 छिंदि. — [b] ) K3. 5 V1 B2 Da Dn1. n3 D2. 3. 5. 8 मतिर् ( for मनो ). K1 संप्रद्रुह्यति; B2 °युज्यते; Da2 D7 T1 G2. 5 M °मुह्यते ( for °मुह्यति ). — [c] ) Bo. 3-5 अविश्वासां; D7 T1 G1. 2. 5 M1-3 °श्वासे ( for °श्वास- ). D1 -कथम्. — [d] ) D7 T G1. 2. 5 M उ( D7 T1 G5 अ )पाश्रित्य ( for उपश्रुत्य ). M3 पितामहः; M4 कथामह ( sic ). — After 3, D4 repeats 1[cd].

4 D5 om. the ref. — [a] ) G1 श्रुणु. K1. 3. 5 V1 B1. 2 Da Dn3 D2. 3. 5. 8 यद्वृत्तं ( for यो वृत्तो ). B4 Dn1 श्रुणुष्व राजन्यो वृत्तो ( Dn1 °न्यद्वृत्तं ). — [b] ) D2 om. ( hapl. ) from निवेशने up to दत्त ( in 4[d] ). — [c] ) K1. 2. 4 D1 पूतन्या ( for पूजन्या ). K2. 3. 5 V1 B ( except Bo ) Da Dn1. n3 D1. 3. 5. 8 संवादं ( D1 °दे ) ( for °दो ). — [d] ) K2. 3. 5 V1 B1. 2 Da Dn1. n3 D2. 3. 8 भूपते ( B1 Dn3 °तेः ); D7 S ( G3. 4 absent ) धीमतः ( for पार्थिव ).

5 [a] ) V1 D5 कंपिल्ये; Dn3 कापिल्ये; D1 कास्मिलो ( sic ); D7 कांपील्ये; T1 G1. 2. 5 M कांबिल्ये ( for काम्पिल्ये ). — [b] ) Ś1 K V1 B Da Dn1. n3 D1-3. 5. 8 त्वं( K5 ह्यं )तःपुर- ( D1 °रे ) ( for अन्तःपुर- ). D2. 3. 8 -निवासिनां ( D8 °नं ) ( for °सिनी ). — [c] ) K4 D1 पूतनी ( for पूजनी ). K4. 5 B4 Dn1. n3 D2. 3. 8. 9 S ( G3. 4 absent ) शकुनिर् ( for °नी ). Da शकुनी पूजनी नाम. — [d] ) K1. 5 दीर्घकाल- ( for °कालं ). Bo गृहोषिता; S ( G3. 4 absent ) सुखो° ( for सहो° ).

6 [a] ) B4 damaged. K3 श्रुतज्ञा; Dn1 T2 ऋ° ( for रु° ). Bo D4. 9 T2 -सत्त्वानां ( for -भूतानां ). — [b] ) D7 G2 तथा ( for यथा ). G1. 2 -जीविकः; M2

C. 12. 5139
B. 12. 139. 7
K. 12. 139. 7

अभिप्रजाता सा तत्र पुत्रमेकं सुवर्चसम् ।
समकालं च राज्ञोऽपि देव्याः पुत्रो व्यजायत ॥ ७
समुद्रतीरं गत्वा सा त्वाजहार फलद्वयम् ।
पुष्ट्यर्थं च स्वपुत्रस्य राजपुत्रस्य चैव ह ॥ ८
फलमेकं सुतायादाद्राजपुत्राय चापरम् ।
अमृतास्वादसदृशं बलतेजोविवर्धनम् ।
तत्रागच्छत्परां वृद्धिं राजपुत्रः फलाशनात् ॥ ९
धात्र्या हस्तगतश्चापि तेनाक्रीडत पक्षिणा ।
शून्ये तु तमुपादाय पक्षिणं समजातकम् ।
हत्वा ततः स राजेन्द्र धात्र्या हस्तमुपागमत् ॥ १०
अथ सा शकुनी राजन्नागमत्फलहारिका ।
अपश्यन्निहतं पुत्रं तेन बालेन भूतले ॥ ११
बाष्पपूर्णमुखी दीना दृष्ट्वा सा तु हतं सुतम् ।
पूजनी दुःखसंतप्ता रुदती वाक्यमब्रवीत् ॥ १२

---

-जीवतः (for °कः). ❀ Cn: जीवजीवकः शाकुनिकः । स हि अयं पक्षी अस्यां दिशि लाभमस्यामलाभं दिशतीति वर्णयति । ❀ —ᶜ) K1 सर्वज्ञाः. B2 Da धर्म- (for सर्व-). K3.5 V1 B1 Da Dn1.n3 D2.3.5.8 -तत्त्वज्ञा; K4 -शर्मज्ञा (for -धर्मज्ञा). —ᵈ) K5 B4 Da Dn1.n3 D1–3.8 -योनिं (for -योनि-). Da -गता च सा; G1 -कृतापि सः; M2 -गता अपि (for -गतापि सा).

7 ᵃ) K1 अपि प्रजाता; D4 अभिजातु तु (sic); D5 अभिजाता च (for °प्रजाता). —ᵇ) Bo.3.4 पुत्रं चैव (for पुत्रमेकं). —ᶜ) D9 -कालं तु; M2 -कालज्ञ- (for -कालं च). Da राज्ञापि; D9 वै राज्ञो. —ᵈ) K5 Bo.3–5 Dn1.n3 D2.3.5.7–9 T G2.5 M1.3.4 देव्यां (for देव्याः). Ś1 K2.4 [ऽ]भ्यजायत; D9 व्यजायते (for °यत). —After 7, K3.5 V1 B Da Dn1.n3 D2.3.5.8 ins.:

319* तयोरर्थे कृतज्ञा सा खेचरी पूजनी सदा ।

8 ᵃ) K5 B1 Da Dn1.n3 D2–4.8 transp. गत्वा and सा. —ᵇ) K3.5 B4 Dn1.n3 D2–5.8 आजहार; V1 B1.2 Da ह्याज°; D7 S (G3.4 absent) जहाराथ (for त्वाजहार). —K3 om. 8ᶜᵈ. —ᶜ) V1 B1.2 D7 T1 G2.5 M स्वस्य; D4 श्वस्य (for च स्व-). D5 T2 G1 पुष्ट्यर्थं राजपुत्रस्य. —ᵈ) D5 T2 G1 स्वस्य; M2 राज्ञः (for राज-). K1 D4.7 T1 G2.5 चैव हि; V1 B2 Da चोभयोः (for चैव ह).

9 ᵇ) D1 M4 राजपुत्रस्य; T1 G5 M2 राज्ञः (M2 °ज्ञा) पुत्राय. —ᶜ) B1.2 Da अमृतस्वादु- (B2 °द्-); D5 आमृतं स्वादु-; D9 अमृतास्वादु- (for °स्वाद-). —ᵈ) K3.5 B2.4 Da Dn1.n3 D2.3.5.7–9 -तेजोभि- (for -तेजोवि-). D4 तेजोबलविवर्धनं. —After 9ᶜᵈ, K3.5 V1 B Da Dn1.n3 D2.3.5.8 ins.:

320* आदायादाय सैवाशु तयोः प्रादात्पुनः पुनः ।

—ᵉ) K1 B4 Dn1.n3 D2.3.8.9 ततः (for तत्र). M2 गच्छन्. K1 बुद्धिं; D4.7.9 S (G3.4 absent) तुष्टिं (M2 प्रीतिं) (for वृद्धिं). —ᶠ) K2 D1 राजपुत्राः. D1 फलाशनं. —After 9, K3.5 V1 B Da Dn1.n3 D2.3.5.8 ins.:

321* ततः स धात्र्या कक्षेण उह्यमानो नृपात्मजः ।
ददर्श तं पक्षिसुतं बाल्यादागत्य बालकः ।

[(L. 1) Bo तत्र (for ततः). Da2 धात्रा. Da1 कर्षेण; Dn3 D2 कक्षेन; D8 कक्ष्येन. Dn1 उह्यमानो. —(L. 2) V1 B -शिशुं (for -सुतं). B4 damaged from बालकः up to हस्त (in 10ᵃ). K3 V1 B Da D5 तं चामार्ग( K3 °गृह्य-; B2 D5 °मार्जे )त बालकः (for the post. half).]

10 B4 damaged up to हस्त. —ᵃ) Ś1 K1.2.4 D1 रात्रौ (for धात्र्या). K3 V1 Bo.1.3–5 Da Dn3 ततो धात्र्या प्रदत्ते( K3 °मुक्ते )न; K5 B2 Dn1 D2.3.5.8 ततो बाल्याच्च यत्नेन. —ᵇ) D9 T2 G1 M क्रीड( M1 °डं )ति. —ᶜ) K5 शून्यं. K2.3.5 Dn1.n3 D2.3.8 च तम्; D7 M4 कृतम् (for तु तम्). Bo.3.4 शून्ये तु समुपादाय. —ᵈ) D1 समुजातकं. —ᵉ) D1 हत्वा (for ततः). D7 S (G3.4 absent) तं (for स). —ᶠ) Ś1 K1.2.4 धात्री- (for धात्र्या). D9 सार्धम् (for हस्तम्). K2.3.5 Dn1.n3 D2.3.5 उपागतः; M2 अथागमत् (for उपा°).

11 ᵃ) K2.3.5 Dn1.n3 D2.3.5.8 पूजनी (for शकुनी). K3 राजा (for राजन्). —ᵇ) K3 V1 Bo.1.5 Da आगम्य (for °मत्). K1 -हारिहा; K2.5 B3 Dn1.n3 D2.3.5.8 -हारिणी (for °का). D7 T G1.2.5 M आगमत्तत्र (D7 T1 G2.5 °त्तात) भामिनी. —ᵈ) T1 G1.2 भूपते (for भूतले).

12 ᵃ) B5 T2 G1 -मुखा (for -मुखी). G1 दीनां. —ᵇ) K1 सा तु मृतं; K5 Dn1.n3 D2.3.8 तं रुदती; Da D5 तु निहतं; D7 S (G3.4 absent) सा (T2 G1 M4 तं) पतितं; D9 सा स्वसुतं (for सा तु हतं). D9

क्षत्रिये संगतं नास्ति न प्रीतिर्न च सौहृदम् ।
कारणे संभजन्तीह कृतार्थाः संत्यजन्ति च ॥ १३
क्षत्रियेषु न विश्वासः कार्यः सर्वोपघातिषु ।
अपकृत्यापि सततं सान्त्वयन्ति निरर्थकम् ॥ १४
अहमस्य करोम्यद्य सदृशीं वैरयातनाम् ।
कृतघ्नस्य नृशंसस्य भृशं विश्वासघातिनः ॥ १५
सहसंजातवृद्धस्य तथैव सहभोजिनः ।
शरणागतस्य च वधस्त्रिविधं ह्यस्य किल्बिषम् ॥ १६
इत्युक्त्वा चरणाभ्यां तु नेत्रे नृपसुतस्य सा ।
भित्त्वा स्वस्था तत इदं पूजनी वाक्यमब्रवीत् ॥ १७
इच्छयैव कृतं पापं सद्य एवोपसर्पति ।
कृतप्रतिक्रियं तेषां न नश्यति शुभाशुभम् ॥ १८
पापं कर्म कृतं किंचिन्न तस्मिन्यदि विद्यते ।
निपात्यतेऽस्य पुत्रेषु न चेत्पौत्रेषु नप्तृषु ॥ १९

C. 12. 5154
B. 12. 139. 22
K. 12. 139. 22

हृतं (for सुतम्). D4 सुतं हत्वा तु सा हृतं. — c) Ś1 K4 D1 पूतनी (for पूजनी). — d) K3 D4 T G1. 5 रुदंती; D1 ददती.

13 Da1 om. 13a–14b. — a) Bo T G2. 5 M1. 3 संगतिर्; G1 °तिं (for °तं). D9 ज्ञात्वा (for नास्ति). — c) K3. 5 V1 B1. 2 Da2 Dn1. n3 D1–4. 8 कारणात् (for °णे). K3. 5 V1 B Da2 Dn1. n3 D1–5. 7. 8 S (G3. 4 absent) सांत्व(M2 श्वास)यंत्येते (for संभजन्तीह). D9 [ए]ते (for [इ]ह). — d) D4. 9 घातयंति (for संत्यजन्ति). K3 वा (for च).

14 Da1 om. 14ab (cf. v. l. 13). D5 om. 14. — b) K3. 5 V1 B1–3 Da2 Dn1. n3 D2. 3. 7. 8 S (G3. 4 absent) कार्यः सर्वापकारि(D7 T1 G2. 5 M °राधि)षु. — c) K1 T2 G1 अपकृत्वा (for °कृत्य). G1 हि (for [अ]पि). — d) V1 शांत्वयंति.

15 a) Bo. 3–5 D5 अहमद्य; D4 स्वयमथ; D7 S (G3. 4 absent) इय(G2 M2 °द)मद्य (for अहमस्य). V1 Bo. 3–5 D7 T1 G2. 5 M3. 4 [अ]स्य (for [अ]द्य). D9 करोम्यस्याहमप्यद्य. — b) Da D7 T2 G2 सदृशं; D1 सदृशे; D4 सदृशीर्. Da Dn3 G2 -यातनं (for °नाम्). — c) M1. 3 [अ]नृशंसस्य (for नृशं°). — d) D7 S (G3. 4 absent) नित्यं (for भृशं). K5 निश्वास-; D9 विश्वस्त- (for विश्वास-). Dn1 विश्वासपरिघातिनः.

16 D5 om. 16ab. — a) G1 damaged. D9 सम- (for सह-). S (G1 damaged; G3. 4 absent) -जातस्य (for -संजात-). — c) Hypermetric. B1 lacuna; D4 प्र- (for च). D1 बुधस् (for वधस्). D7 S (G3. 4 absent) शरण्यस्य वधश्चैवं (T2 G2 M4 °श्चैव; G1 °स्यैव; M1–3 °श्चेति). — d) B1 यस्य; D7 T G1. 2. 5 तस्य (for ह्यस्य). K3. 5 Dn1. n3 D2–5. 8 M त्रिविधं ह्येव (D4. 5 यस्य; M तस्य) पातकं; V1 B2 Da °धं यस्य कल्मषं.

17 D4 reads 17 after 18c. — a) K1 तच्छ्रुत्वा (for इत्युक्त्वा). B1 ते (for तु). — b) D7 T1 G2. 5 च; T2 M2. 3 वा; M1 सः (for सा). — c) K1 छित्वा (for भित्त्वा). Da2 D4 स्वस्थि(D4 °स्था)त* (for स्वस्था तत). Da1 भित्वा सस्थ तत मात्रं (sic); D7 S (G3. 4 absent) हृ(T2 G1 कृ)त्वा चैवांब(M2 °बु)-रस्येदं. — d) Ś1 K4 D1 पूतनी; G1 पूजनीं.

18 a) K1 इच्छयैवं; K3. 5 V1 B D (Dn2 D6 absent) T G2. 5 M4 Cv °येह (D1 °वैव; D9 °येव); M1–3 °तेह (for °यैव). — b) M4 सत्य (for सद्य). K2. 5 Dn1. n3 D2. 3. 8 तं च (for एव). Bo. 3. 4. 5 (marg. as in text) D5 [उ]पसज्जति; Cv °सर्पति (as in text). — c) K1. 2. 4 D2 कृतं; V1 कृते (for कृत-). V1 D7 S (G3. 4 absent) -कृतं (for -क्रियं). D2 om. प्रतिक्रियं. K3. 5 B Da Dn1. n3 D3–5. 8. 9 कृतं (Bo. 2. 3. 5 Da1 D4. 5. 9 कृते; B1 कृत-) प्रतिकृतं ये(Bo. 5 ह्ये)षां. — After 18c, D4 reads 17. — d) D8 तन् (for न). D1 M1. 3 नश्यंति.

19 a) V1 B1. 3. 5 Cv पापकर्म; Da पापपुण्य-; Dn1 पापं पुण्यं. M1–3 तेषां (for किंचिन्). — b) K3. 5 V1 Bo. 1. 3–5 Dn1. n3 D2. 3. 5. 7–9 S (G3. 4 absent) यदि तस्मिन्न (by transp.); B2 Da विततं तं न; D4 यास्मिंस्तस्मिन्न. K5 V1 B1. 2 Da Dn1. n3 D2. 3. 8. 9 दृश्यते (for विद्यते). — c) K5 Dn3 D2. 3. 5. 8 नृपते तस्य; Bo. 3–5 D4 निपात्य (D4 °त्यै-) तस्य; B2 °त्येते सु-; Da Dn1 निर्याति (Dn1 °ति-) तस्य (for निपात्यतेऽस्य). — d) D9 पुत्रेषु (for पौ°). K3. 5 V1 B Da Dn1. n3 D2–5. 7. 8 S (G3. 4 absent) पौत्रेष्वपि च नप्तृषु (T2 G1 जनादिषु). — After 19, K3. 5 V1 B Da Dn1. n3 D2. 3. 5. 8 ins.:

322* ब्रह्मदत्तः सुतं दृष्ट्वा पूजन्या हृतलोचनम् ।
कृते प्रतिकृतं मत्वा पूजनीमिदमब्रवीत् ।

[(L. 2) V1 Bo वाक्यम् (for इदम्).]

C. 12. 5156
B. 12. 139. 24
K. 12. 139. 24

ब्रह्मदत्त उवाच ।

अस्ति वै कृतमस्माभिरस्ति प्रतिकृतं त्वया ।
उभयं तत्समीभूतं वस पूजनि मा गमः ॥ २०

पूजन्युवाच ।

सकृत्कृतापराधस्य तत्रैव परिलम्बतः ।
न तद्बुधाः प्रशंसन्ति श्रेयस्तत्रापसर्पणम् ॥ २१
सान्त्वे प्रयुक्ते नृपते कृतवैरे न विश्वसेत् ।
क्षिप्रं प्रबध्यते मूढो न हि वैरं प्रशाम्यति ॥ २२
अन्योन्यं कृतवैराणां पुत्रपौत्रं निगच्छति ।
पुत्रपौत्रे विनष्टे तु परलोकं निगच्छति ॥ २३
सर्वेषां कृतवैराणामविश्वासः सुखावहः ।
एकान्ततो न विश्वासः कार्यो विश्वासघातकः ॥ २४
न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत् ।
कामं विश्वासयेदन्यान्परेषां तु न विश्वसेत् ॥ २५
माता पिता बान्धवानां वरिष्ठौ
भार्या जरा बीजमात्रं तु पुत्रः ।
भ्राता शत्रुः क्लिन्नपाणिर्वयस्य
आत्मा ह्येकः सुखदुःखस्य वेत्ता ॥ २६

---

20 $^{a}$) D7 T1 G5 ते; G1 damaged (for वै). — $^{b}$) K3 अस्मि (for अस्ति). M4 प्रतिकृतस् (for °कृतं). B3 मया (for त्वया). — $^{c}$) K3 तं (for तत्). D7 T1 G5 समं (for समी-). — $^{d}$) Ś1 K2. 4 D1 पूतनि; K8 पूजनी. K3 गतः; D4. 9 गम (for गमः).

21 Ś1 K1. 4 D1 पूतनी (for पूजनी). — D9 om. 21$^{ab}$. — $^{a}$) D5 मत्तः; M1 असकृत् (hypermetric) (for सकृत्). — $^{b}$) K1 परिवरस्यतः; G1 °लंबनं; M2. 3 °लंबितः. — $^{c}$) K3 बुद्ध्या; D1 बुधः (for बुधाः). — $^{d}$) Dn3 श्रेयस्तत्त्वापतर्पणं (sic).

22 $^{a}$) B4 G1 damaged. K5 B3 Dn1. n3 D2. 3. 8 सततं; V1 B1. 2. 5 (marg.) Da विकृते; D7 S (G1 damaged; G3. 4 absent) विवृते (for नृपते). — $^{b}$) Ś1 K1 कृतवैरेण; Da D7 S (G3. 4 absent) वैरे (Da कृते) चैव (for कृतवैरे न). — D9 om. (hapl.) 22$^{c}$–25$^{b}$. — $^{c}$) K2. 3. 5 V1 B Da Dn1. n3 D2. 3. 5. 8 स (Dn3 D2. 8 सं-) बध्यते; D4 स व°; D7 T G2. 5 M स हन्यते; G1 संमन्यते (for प्रबध्यते). D4 पापो (for मूढो). — $^{d}$) B1 वैरः; Da2 वर्णः. Da1 प्रसंशति; G2 प्रशाम्यते.

23 D9 om. 23 (cf. v. l. 22). — $^{a}$) K5 V1 B (except B1) Da Dn1. n3 D2. 3. 7. 8 S (G3. 4 absent) अन्योन्य- (for °न्यं). — $^{b}$) K3. 5 V1 B Da Dn1. n3 D2. 3. 5. 7. 8 T1 G2. 5 नियच्छति; D1 नि*च्छ-ति; M1. 3 न गच्छति (for निग°). M4 पुत्रपौत्राणि गच्छति. — Dn3 om. (hapl.) 23$^{cd}$. Ś1 reads 23$^{cd}$ on marg. — $^{c}$) D5 -पौत्र- (for -पौत्रे). K3 निविष्टे; B0. 5 प्रनष्टे; G1 विनिष्टे (for विनष्टे). V1 B0–3. 5 Da D5 च (for तु). K2. 5 B4 Dn1 D2. 3. 8 पुत्रपौत्र-विनाशे (Dn1 °शं) च. ❀ Cv: पुत्रे पौत्रे विनिर्माय कृतस्य प्रतिकृतं विनिर्माय । ❀ — V1 reads 23$^{d}$ on marg. G1 damaged. — $^{d}$) D5 परं लोकं; M पर-लोके (for °लोकं). K2. 5 V1 B Da Dn1 D2. 3. 5. 7. 8 T1 G2. 5 नियच्छति; M4 [ऽ]नुगच्छति (for निग°).

24 D9 om. 24 (cf. v. l. 22). — $^{a}$) M4 स तेषां (for सर्वेषां). — $^{b}$) K3. 5 V1 B1. 2 Da Dn1. n3 D2. 3. 5. 8 सुखोदयः (for सुखावहः). — $^{d}$) D1 कार्ये. M3 विश्वस्त- (for विश्वास-). K3. 5 V1 B Da Dn1. n3 D2. 3. 5. 8 -घातकैः; D4. 7 T1 G2. 5 -घातके (for °कः).

25 = (var.) Ādi, App. I (No. 81), lines 125–126: 5. 38. 9: 12. 136. 138; 138. 43; Pañcatantra 2. 43; 4. 14. D9 om. 25$^{ab}$ (cf. v. l. 22). — $^{a}$) B4 damaged. M2 विश्वसेन्न अविश्वस्ते. — $^{b}$) K1 D5 नापि; K2. 3. 5 V1 B Da Dn1. n3 D2. 3. 8 T2 G1 नाति- (for ऽपि न). — After 25$^{ab}$, Ś1 K Dn1. n3 D2. 3. 5. 8 ins. (= [var.] 136. 136$^{cd}$):

323* विश्वासाद्भयमुत्पन्नमपि मूलं निकृन्तति ।

[Ś1 K4 विश्वस्ताद् (for विश्वासाद्). Ś1 K2. 4 मूलान्यपि; D5 मूलादपि (for अपि मूलं).]

— D1 om. (hapl.) 25$^{cd}$. — $^{c}$) G1 damaged. K4 विश्वसयेद्. — $^{d}$) K1 न तु (by transp.); K2. 5 B0 Dn1. n3 D2–4. 8. 9 च न; Da न सु-. — After 25, Ś1 K1. 2. 4 D1 (om. 25$^{ab}$). 4. 9 ins.:

324* अविश्वासात्परं हन्ति विश्वासाद्वध्यते परैः ।

[K4 विश्वासो. K4 D1 बाध्यते; D4 वन्यते (for वध्यते).]

26 $^{a}$) D4 om. from माता up to क्लिन्न (in 26$^{c}$). Ś1 K2. 4 transp. माता and पिता. — $^{b}$) K5 D2 राजा; D7 S (G3. 4 absent) क्षेत्रं (for जरा). B1 -मात्रस् (for -मात्रं). K1 V1 B D9 G1 पुत्राः; M1. 3

अन्योन्यकृतवैराणां न संधिरुपपद्यते ।
स च हेतुरतिक्रान्तो यदर्थमहमावसम् ॥ २७
पूजितस्यार्थमानाभ्यां जन्तोः पूर्वापकारिणः ।
चेतो भवत्यविश्वस्तं पूर्वं त्रासयते बलात् ॥ २८
पूर्वं संमानना यत्र पश्चाच्चैव विमानना ।
जह्यात्तं सत्त्ववान्वासं संमानितविमानितः ॥ २९
उषितास्मि तवागारे दीर्घकालमहिंसिता ।
तदिदं वैरमुत्पन्नं सुखमास्स्व व्रजाम्यहम् ॥ ३०

ब्रह्मदत्त उवाच ।
यत्कृते प्रतिकुर्याद्वै न स तत्रापराध्नुयात् ।
अनृणस्तेन भवति वस पूजनि मा गमः ॥ ३१
पूजन्युवाच ।
न कृतस्य न कर्तुश्च सख्यं संधीयते पुनः ।
हृदयं तत्र जानाति कर्तुश्चैव कृतस्य च ॥ ३२
ब्रह्मदत्त उवाच ।
कृतस्य चैव कर्तुश्च सख्यं संधीयते पुनः ।

C. 12. 5170
B. 12. 139. 37
K. 12. 139. 37

---

पुत्रं (for पुत्रः). — $^{c}$) G1 वधस्य (for वयस्य). — $^{d}$) K5 Dn1. n3 D2–4. 7–9 S (G3. 4 absent) भोक्ता (for वेत्ता).

27 $^{a}$) K3 B2 Da1 D5 M2 अन्योन्यं (for °न्य-). — $^{b}$) D4 पुनः संधिर्न विद्यते. — D1 om. 27$^{c}$–29$^{b}$. — $^{c}$) B4 damaged. Ś1 K1 न च; Da तस्य; M4 स हि (for स च). Ś1 K1. 2 अपक्रांतो; B4 damaged; M2 इति क्रांतो (for अतिक्रान्तो).

28 Cf. 43. D1 om. 28 (cf. v. l. 27). — $^{a}$) G2 पूजिताश्च (for °तस्य). Ś1 K1. 4 [आ]त्ममानाभ्यां; D5 [अ]तु°; Cv [अ]र्थं° (as in text). — $^{b}$) D7 T1 G2. 5 M स्यात्तु; T2 सांत्वं; G1 स*; Cv अंते (for जन्तोः). — $^{c}$) K2. 3. 5 V1 B1 Dn1. n3 D2. 3. 8 मनो; D7 T G1. 2. 5 M हृदयं (for चेतो). V1 भवत् (for भवति). K4 विश्वस्तं; D5 [अ]विश्वस्तः. Cv हृदय एव विश्वस्तं. — $^{d}$) K3. 5 V1 B D (D1 om.; Dn2 D6 absent) S (G3. 4 absent) Cv कर्म (T2 नरस्) (for पूर्वं). K1 भ्रासयते; D4 त्रायंयत; D5 एवाश्रयाद् (for त्रासयते). K5 Da Dn1 D2. 3. 5. 7. 8 T1 G5 बलान् (for °त्). ❀ Cv: अर्थमानाभ्याम्, अर्थो मया आनीतफलादिदानम् । मानस्तव पुत्रे बहुमानः । ताभ्यां पूजितस्य । अन्ते अवसाने । पूर्वापकारिणः प्रथमं मम पुत्रवधकारिणस्तव हृदयं यद्यपि विश्वस्त तथापि कर्म, तव पुत्रनयनोत्पाटनाख्यं कर्म, बलान्मां त्रासयते इति योजना । ❀

29 D1 om. 29$^{ab}$ (cf. v. l. 27). Dn3 om. 29–30. — $^{a}$) B1 पूर्वं-. K1 M1. 3 यात्र (for यत्र). — $^{b}$) D4 वैव. K1 विमानिता; D2. 8 °नता; M2 °नना:. — $^{c}$) K5 V1 Dn1 D1 तत्; T2 G1 स (for तं). D7 T1 G2. 5 बुद्धिमान्; D9 सर्वथा (for सत्त्ववान्). K2. 5 Dn1 D3. 5. 8 स्थानं (for वासं). K1 जह्यात्तत्रैव संवासं. — $^{d}$) G1 damaged. Bo. 3–5 D5 मानितश्च; D4 सन्मानित- (for संमा°). V1 B1. 2. 5 m -विमानितं; D6 [अ]विमानिनं (for -विमानितः). K2. 5 Dn1 D2. 3. 8 शत्रोः संमानितोपि सन्.

30 With 30, cf. Jātaka 343, Gāthā 1. Dn3 om. 30 (cf. v. l. 29). — $^{b}$) K3. 5 Dn1 D2. 3. 8 सम(D2. 8 °मा)र्चिता; D5 G1 M2 अहिंसता (M2 °का); D9 (marg.) अनिंदिता (for अहिंसिता). — $^{d}$) B4 damaged. T2 G1 स्वैरम् (for सुखम्). K1 आसु; K3. 5 V1 B (B4 damaged) Da D2. 3. 5. 8. 9 आस्त्व; M2 आस्य; M4 आस (for आस्स्व).

31 With 31, cf. Jātaka 343, Gāthā 2. — $^{a}$) All MSS. (except Ś1 K1. 4 Dn3; B4 damaged; Dn2 D6 G3. 4 absent) यः (for यत्-). B5 हि (for वै). — $^{b}$) G1 damaged. M2 om. स-. K3 B1 Da [अ]पराध्यते (Da °ति); K5 D4 °ध्यवान्; D7 T G2. 5 M °ध्नुते (for °ध्नुयात्). — $^{d}$) Ś1 K1. 2. 4 D1 पूतनि; K3 पूजनिर्. K5 M3 गम.

32 With 32, cf. Jātaka 343, Gāthā 3. B1 om. (hapl.) 32 and 33 (with ref.). K1 om. the ref. Ś1 K1 (before corr.). 4 पूतनी (for पूजनी). — $^{a}$) Bo स कृतस्य; Da1 D1 न कृतश्च; M2 न तु तस्य; Cv न कृतस्य (as in text). K2. 5 B3. 4 Dn1. n3 D2. 3. 8 तु; K3 Bo. 5 D5 च (for the second न). K1 एनकृतस्य कर्तुश्च. — $^{b}$) K1 सुखं (for सख्यं). — After 32$^{ab}$, M2 reads 34$^{ab}$ for the first time, repeating it in its proper place. K1 om. (hapl.) 32$^{c}$–33$^{d}$. V1 reads 32$^{c}$–33$^{b}$ on marg. — $^{c}$) D1 तेत्र; D7 न व्य-; T1 G5 तस्य; G2 न वि-; M2 त्वेव (for तत्र). — $^{d}$) B2 Da1 वा (for च).

33 With 33, cf. Jātaka 343, Gāthā 4. K1 B1 om. 33 (cf. v. l. 32). V1 reads 33$^{ab}$ on

C. 12. 5170
B. 12. 139. 37
K 12. 139. 37

वैरस्योपशमो दृष्टः पापं नोपाश्नुते पुनः ॥ ३३

पूजन्युवाच ।

नास्ति वैरमुपक्रान्तं सान्त्वितोऽस्मीति नाश्वसेत् ।
विश्वासाद्बध्यते बालस्तस्माच्छ्रेयो ह्यदर्शनम् ॥ ३४
तरसा ये न शक्यन्ते शस्त्रैः सुनिशितैरपि ।
साम्ना ते विनिगृह्यन्ते गजा इव करेणुभिः ॥ ३५

ब्रह्मदत्त उवाच ।

संवासाज्जायते स्नेहो जीवितान्तकरेष्वपि ।
अन्योन्यस्य च विश्वासः श्वपचेन शुनो यथा ॥ ३६
अन्योन्यकृतवैराणां संवासान्मृदुतां गतम् ।
नैव तिष्ठति तद्वैरं पुष्करस्थमिवोदकम् ॥ ३७

पूजन्युवाच ।

वैरं पञ्चसमुत्थानं तच्च बुध्यन्ति पण्डिताः ।
स्त्रीकृतं वास्तुजं वाग्जं ससपत्नापराधजम् ॥ ३८
तत्र दाता निहन्तव्यः क्षत्रियेण विशेषतः ।
प्रकाशं वाप्रकाशं वा बुद्ध्वा देशबलादिकम् ॥ ३९

---

marg. — $^{a}$) K3 D5 [ए]व च; Da चेह; D1 चैवं; D4 वैव; Cv नैव (for चैव). Bo. 3–5 D5 सख्यं (for कर्तुश्च). — $^{b}$) Bo 3–5 D5 कर्तुः; Dn1. n3 D2. 3. 8 कार्यं; D1 सुखं (for सख्यं). — $^{d}$) G1 पापश्च; M1–3 फलं. K5 नोपाश्नुतं; Da नो प्राप्नुते; T2 G1 M1 चैवाप्नु- (M1. °श्नु)ते; M2–4 चोपाश्नुते (for नोपा°). K5 om. पुनः.

34 D7 reads 34$^{ab}$ and repeats 34$^{cd}$, T1 G2. 5 M repeat, while T2 G1 read, 34 with ref. after 47$^{ab}$. Ś1 K1. 4 D1 पूतनी (for पूजनी). — $^{a}$) Cv चैवम् (for वैरम्). K3. 5 V1 B Da Dn1. n3 D2–5. 8. 9 Cv अतिक्रांतं (for उप°). D7 T G1. 2. 5 M (all [except D7 T2 G1] second time) नास्ति वैरस्य विश्वासः. — $^{b}$) V1 Bo. 1. 4. 5 शांवितो; D4. 9 T2 G2 M1. 2 (last three second time) सांत्विता. V1 D4 विश्वसेत्; T2 M2 (second time) वै नृप. — $^{c}$) Ś1 K4 Dn3 D1 बाध्यते; D3. 5. 7 T1 (last two both times). 2 G2 (second time). 5 (both times) M1 (second time). 2 (both times). 3 (second time). 4 (both times) वध्यते (for ब°). K3. 5 Dn3 B1. 3 D2. 3. 5. 7 (first time). 8 T1 G5 (both first time) लोके; V1 B2 Dn1 D7 (second time) T2 G1 M (the last five both times) लोकस्; T1 G2. 5 (all second time) तस्मात् (for बालस्). G2 (first time) स्याद्बध्यते वैरिलोकस्. — $^{d}$) G1 तस्माज्ज्ञेयो; G2 (second time) परं श्रेयं (for तस्माच्छ्रेयो). K5 Dn1. n3 D2. 3. 8 [ऽ]प्यदर्शनं; B1 ह्यदर्शनः (for °र्शनम्). T1 G5 (both second time) श्रेयो ह्यदर्शनं परं.

35 = (var. 343*). T2 om. 35–36. G1 reads 35 after 62. — $^{a}$) D2 यं (for ये). Da गृह्यंते; D5 शक्यंति. G1 भिन्नाश्लिष्टा न शक्यंते. — $^{b}$) B1 G1 शास्त्रैः (for शस्त्रैः). M2 सं- (for सु-). — $^{c}$) D4 साम्ना स; M2 सामांते (for साम्ना ते). K3. 5 V1 B Da Dn1. n3 D1–3. 5. 7–9 M1. 3 [ऽ]पि; D4 न (for वि-). — $^{d}$) K1 एव (for इव).

36 T2 G1 om. 36 (for T2, cf. v. l. 35). — $^{a}$) D5 विश्वासाज्; M1. 3 संवादाज् (for °साज्). — $^{c}$) Bo. 5 D5 तु; B4 lacuna (for च). Ś1 D1 निश्वासः; V1 संवासः (for विश्वासः). — $^{d}$) D7 T1 G2 M श्वानश्वपचयोरिव.

37 Before 37, D4 M ins. पूजनी. — $^{b}$) M2 संन्यासान्; M4 सांवा° (for संवा°). D5 अमृतां (for मृदुतां). M1 गतः. B1 संवासान्मृदु चागतं; Da °सान्न गतागतं. — $^{c}$) D4. 7. 9 T1 G2. 5 M2–4 नाव-; G1 lacuna (for नैव). T1 G5 मद्- (for तद्). K1 स्नेहं (for वैरं). ❀ Cv (reading नावतिष्ठति): अव अधस्ताच्छंसत्तिष्ठतीति न। ❀

38 K3 D4. 7 S (G3. 4 absent) om. the ref. Ś1 K1. 4 D1 पूतनी (K1 °ना) (for पूजनी). — $^{a}$) K1 पंचसमुक्तानां; Cv °त्थानं (as in text). — $^{b}$) Ś1 K1. 2. 4 B3–5 Dn3 D1. 5. 7. 9 T1 G2. 5 बुध्यंते तच्च (D7 T1 G2. 5 तत्र) पंडिताः. — $^{c}$) D1 स्त्रीकृत- (for स्त्रीकृतं). D9 वाग्नुजं; M1. 3. 4 वस्तुजं. ❀ Cv (reading अकृतं): अकृतं गोव्याघ्रयोरिव स्वभावकृतम्। ❀ — $^{d}$) Ś1 D8 ससापत्नापराधजं; K1 समपत्ना°; K3 B1 Da D4 सा(Da स)पत्नमप°; K4 D1 M2 स(M2 स्व)संपन्नापराधजं (D1 °जनं; M2 °धजे); D5 स सम्यग्नाप° (sic); D7 T G1. 2. 5 M1. 3. 4 Cv स्वसपत्नापराधजं (D7 °नं).

39 $^{a}$) K3 D4 आदावेव; D7 T1 G2. 5 तत्र सर्वे; D9 तत्र कर्ता (for तत्र दाता). K2. 5 Da2 Dn1. n3 D1–3. 8 G1. 2 न हंतव्यः (G2 °व्यं); D7 T1 G5 निहंतव्यं. — $^{c}$) B4 damaged. D8 च (for वा). B1 om. (hapl.) [अ]प्रकाशं वा. Dn1. n3 D2. 3. 8 च (for वा). — $^{d}$) D1 बुद्ध्या. K1 दोष- (for देश-). K3. 5 V1 B D (Dn2 D6 absent) S (G3. 4 absent)

कृतवैरे न विश्वासः कार्यस्त्विह सुहृद्यपि ।
छन्नं संतिष्ठते वैरं गूढोऽग्निरिव दारुषु ॥ ४०
न वित्तेन न पारुष्यैर्न सान्त्वेन न च श्रुतैः ।
वैराग्निः शाम्यते राजन्नौर्वाग्निरिव सागरे ॥ ४१
न हि वैराग्निरुद्भूतः कर्म वाप्यपराधजम् ।
शाम्यत्यदग्ध्वा नृपते विना ह्येकतरक्षयात् ॥ ४२
सत्कृतस्यार्थमानाभ्यां स्यात्तु पूर्वापकारिणः ।
नैव शान्तिर्न विश्वासः कर्म त्रासयते बलात् ॥ ४३
नैवापकारे कस्मिंश्चिदहं त्वयि तथा भवान् ।
विश्वासादुषिता पूर्वं नेदानीं विश्वसाम्यहम् ॥ ४४
ब्रह्मदत्त उवाच ।
कालेन क्रियते कार्यं तथैव विविधाः क्रियाः ।
कालेनैव प्रवर्तन्ते कः कस्येहापराध्यति ॥ ४५
तुल्यं चोभे प्रवर्तेते मरणं जन्म चैव ह ।
कार्यते चैव कालेन तन्निमित्तं हि जीवति ॥ ४६
बध्यन्ते युगपत्केचिदेकैकस्य न चापरे ।

C. 12. 8451
B. 12. 139. 51
K. 12. 139. 51

दोषबलाबलं.

40 Before 40, D7 T G2. 5 ins. पूजनी. — a) Ś1 K4 Da1 D5 -वैरेण; D7 S (G3. 4 absent) -पापे न; Cv -पापस्य (for -वैरे न). — b) B2 Da1 स्नेहः; T2 त्वथ (for त्विह). K3 D4. 9 कथंचन; B2 सुहृत्स्वपि (for °द्यपि). — c) K3 V1 B D4. 5. 7 S (G3. 4 absent) प्रच्छन्नं; D1 छिन्नं सं- (for छन्नं सं-). — d) K5 D2. 3 om. (hapl.) from दारुषु up to रिव (in 41d).

41 K5 D2. 3 om. up to रिव (cf. v. l. 40). — a) G1 damaged. B2 च वृत्तैर्; Da च वित्तेन (for वित्तेन न). D7 S (G1 damaged; G3. 4 absent) पौरुष्यान् (for पारुष्यैर्). D5 पौरुषैर्न च वित्तेन. — b) B1. 2. 4 शांत्वेन. D5 श्रितैः (for श्रुतैः). B3 Dn1. n3 D7. 8 T1 G5 न च सांत्वेन (D8 °त्वैर्न) वा श्रु(B3 श्रि)तैः. — c) Dn1. n3 D8 कोपाग्निः; G2 वैराग्यः (for °ग्निः). — d) Dn1. n3 D8 तोयाग्निर् (for औवा°). D7 T1 G1. 2. 5 M1 निमग्नोग्निरिवार्णवे; M2–4 नौर्मग्नेव महार्णवे.

42 a) T2 G1 नापि (for न हि). K2. 4 उत्पन्नः; M3 उद्भूतं. — b) B4 damaged. Bo. 3–5 कृतं (for कर्म). K3–5 Dn1 D2. 3. 5. 8 T2 च (for वा). K3 अपराधजः. V1 B1. 2 Da कर्म वाग(V1 B1 °ग्ज)पराधजः (Da °जं). — c) B3 [अ]जग्ध्वा; D8. 9 [अ]दग्धा. K3 V1 B1. 2 Da D4. 7 S (G3. 4 absent) अदग्ध्वा शाम्यते नृणां. — d) K1 ह्येकत्र न; K4 ह्येकचर- (for ह्येकतर-).

43 Cf. 28. — a) D1 सत्कृतस्य. B1 Dn3 [अ]न्व- (Dn3 °नु)मानाभ्यां (for [अ]र्थ°). — b) K3 D4 पश्चात्; K5 Dn1. n3 D2. 3. 8 अनु-; D7 S (G3. 4 absent) तत्र; D9 शत्रोः (for स्यात्तु). G2 सर्वापकारिणः. — c) V1 B1. 2 Da Dn1 D4. 9 न वै; D4 damaged (for नैव). D1 शांतिं. D5 विश्वासात्. K5 Dn3 D2. 3. 8 नादेयो मित्रविश्वासः. — d) V1 B Da D3. 5. 7 T1 G5 [ऽ]बलान्. G1. 2 कर्मणा जायते बलात्.

44 a) K1 V1 Da D4 नैवोपकार्ये; K2. 3. 5 B1 Dn1. n3 D2. 3. 8 नैवापकार्ये; Bo. 2–5 न चोपकार्ये; D5 नोपकार्येपि; D9 न वापि कार्ये; M Cv नैवोपकारे (for नैवा°). — b) K3 D4. 7 यथा (for तथा). — c) K5 V1 B1 Da Dn1. n3 D2. 3. 8 उषितास्मि गृहेहं ते; D7 T1 G2. 5 उषितौ चावि(D7 वावि-; G2 वापि)चकितौ (T1 G5 °तं); T2 उषितायावचरितं; G1 °ता वाचि चकितं; M °ता यावच्चकितं (M2 °ता).

45 a) D1 कार्ये; D4 सर्वं (for कार्यं). — b) Bo. 3–5 कालेन (for तथैव). D4. 7 (m as in text) प्रजाः (for क्रियाः). — c) K2. 5 Dn1. n3 D2. 3. 8 G1 [ए]ते; K3 V1 B (B4 damaged) Da D4. 5 T2 [इ]ह (for [ए]व). — d) D7 T1 G1. 2. 5 कस्येति (for °ह). K1. 3 V1 B1. 2 Da T2 M1. 3. 4 [अ]पराध्यते.

46 a) T G1. 2. 5 तुल्ये (for तुल्यं). D4 G2 वोभे. K4 Dn3 D2. 4 G1 प्रवर्तते; V1 B1. 2 Da T2 M1–3 °र्ते-तां (for °र्तेते). — b) K1 transp. जन्म and चैव. D5. 7 T1 G2. 5 M2 हि; T2 च; G1 lacuna (for ह). — c) K3 Bo. 3. 4 D8 M2–4 कार्यंते; V1 B2 D9 T1 G2. 5 कार्येते (for कार्यते). D4 नैक- (for चैव). Ś1 K1. 4 D1 बालेन (for कालेन). — d) K3. 5 V1 B Da Dn1. n3 D2. 3. 5. 8 न; Da2 (also) D4. 7 S (G3. 4 absent) च (for हि). Ś1 K1. 2 D9 जीवितं (for जीवति).

47 a) D2 बाध्यंते; T1 G5 M3. 4 वध्यंते. — b) D1. 4. 9 एकैकश्येन (for °स्य न). Da केचिदेकैकशो न च; D7 S (G3. 4 absent) एकैकं च प(T2 G1 M चाप)रे तथा. — After 47ab, D7 reads 34ab and repeats 34cd, T1 G2. 5 M repeat, while T2 G1 read

C. 12. 5184
B. 12. 139. 51
K. 12. 139. 51

कालो दहति भूतानि संप्राप्याग्निरिवेन्धनम् ॥ ४७
नाहं प्रमाणं नैव त्वमन्योन्यकरणे शुभे ।
कालो नित्यमुपाधत्ते सुखं दुःखं च देहिनाम् ॥ ४८
एवं वसेह सस्नेहा यथाकालमहिंसिता ।
यत्कृतं तच्च मे क्षान्तं त्वं चैव क्षम पूजनि ॥ ४९

पूजन्युवाच ।

यदि कालः प्रमाणं ते न वैरं कस्यचिद्भवेत् ।
कस्मात्त्वपचितिं यान्ति बान्धवा बान्धवे हते ॥ ५०
कस्माद्देवासुराः पूर्वमन्योन्यमभिजघ्निरे ।
यदि कालेन निर्याणं सुखदुःखे भवाभवौ ॥ ५१
भिषजो भेषजं कर्तुं कस्मादिच्छन्ति रोगिणे ।
यदि कालेन पच्यन्ते भेषजैः किं प्रयोजनम् ॥ ५२
प्रलापः क्रियते कस्मात्सुमहाञ्शोकमूर्छितैः ।
यदि कालः प्रमाणं ते कस्माद्धर्मोऽस्ति कर्तृषु ॥ ५३
तव पुत्रो ममापत्यं हतवान्हिंसितो मया ।
अनन्तरं त्वया चाहं बन्धनीया महीपते ॥ ५४

---

34 (with ref.). Before $47^{cd}$, D7 S (G3. 4 absent) ins. ब्रह्मदत्त उवाच. — $^{c}$) D1 काले. — $^{d}$) D7 T1 G1. 2. 5 M संप्राप्तो (for °प्य). K4 इह (for इव).

48 $^{a}$) D9 वैवश्यम् (sic); D9 (marg.) वैरस्य; G1 देवत्वम् (for नैव त्वम्). — $^{b}$) K2. 3. 5 B1–4 Dn1. n3 D2. 3. 5. 7. 8 S (G3. 4 absent) अन्योन्यं (for °न्य-). K1. 2 B0 Da -कारणे; K3. 5 B3 Dn1. n3 D2. 3. 5. 7. 8 S (G3. 4 absent) कारणं (M4 °णा) (for -करणे). — $^{c}$) D1 काले. G1 दत्तम् (for नित्यम्). K1. 5 V1 B1–3 D (Dn2 D6 absent) S (G3. 4 absent) उपादत्ते (for °धत्ते). K3 कालो दत्ते महाभागे. — $^{d}$) T2 G1 दुःखादुःखं; M2 सुखदुःखं. D1 देहिनं.

49 $^{a}$) D4 सुखं (for एवं). V1 वसैव. K4 संस्नेहा; Dn3 D3 मत्स्नेहा; D5 lacuna (for सस्नेहा). — $^{b}$) K2. 3. 5 B3. 4 Dn1 D1–5. 8. 9 M -कामम् (for -कालम्). G1 अहिंसितं; M2 °सया. — $^{c}$) M2 त्वत् (for यत्). K3. 5 B3. 4 Da2 Dn1. n3 D2. 3 तत्तु मे; Da1 तव मे; D7 S (G3. 4 absent) ते (M2 तु) मया; D8 तं तु मे (for तच्च मे). D4 ज्ञातं (for क्षान्तं). K4 यत्कृतं तत्र मोक्षांतं. — $^{d}$) K3–5 B3 Dn1. n3 D2. 3. 8 च वै; Da2 चर; D4 वैव; D9 अपि (for चैव). Ś1 K1. 4 पूतनि; D1 पूतशो; T2 G2 M2 पूजनी (M2 °निः). D5 क्षमस्व च सुपूजनि.

50 Ś1 K1 D1 पूतनी. — $^{a}$) Ś1 K2 कालो यदि (by transp.); K4 काले यदि; G1 यदि कालं. — $^{b}$) D5 चिरं (for वैरं). — $^{c}$) B0 G2 तस्माद् (for कस्मात्). K3 V1 B1. 2 Da D7 T1 G2. 5 व्यपचितिं (B2 °तं); B0 D5 उप°; D2. 8 त्वपचितं; D4. 9 T2 G1 अ(D9 आ)पचितिं; M ह्यप° (for त्वप°). D4 om. यान्ति. — $^{d}$) G1 बांधवा (for °वे). K3. 5 B3 Da2 Dn1. n3 D2. 3. 8 बांधवा बांधवैर्हतैः.

51 D1 om. $51^{a}$–$52^{b}$. — $^{a}$) M3 तस्माद् (for क°). D7 S (G3. 4 absent) सर्वे (for पूर्वम्). — $^{b}$) M4 ह्यन्योन्यम्. — $^{c}$) D5 कार्येण (for कालेन). K1 निर्याणां; D4 निगुणं. — $^{d}$) B4 damaged. K5 B3. 5 Dn1 n3 D2. 3. 8 M4 सुखं दुःखं (M4 °खे); M2 सुखदुःखौ (for °दुःखे).

52 D1 om. $52^{ab}$ (cf. v. l. 51). — $^{a}$) K8 भेषजो; D4 भिषजेर्. Ś1 K (except K5) B2. 3 D3. 5 भैषजं; B4 damaged (for भेषजं°). — $^{b}$) M2 तस्माद् (for क°). K5 B3 Dn1. n3 D2–4. 8. 9 G1 रोगिणः (for °णे). — D2 om. (hapl.) $52^{c}$–$53^{b}$. — $^{c}$) K1. 2 D1 पश्यंते; D4 युज्यंत (for पच्यन्ते). — $^{d}$) D1. 4 भि(D1 भै)-षजैः.

53 D2 om. $53^{ab}$ (cf. v. l. 52). — $^{ab}$) D4 प्रालापः. All MSS. (except Ś1 K1. 2. 4 B2 D5 M2; D2 om.; Dn2 D6 G3. 4 absent) transp. क्रियते and सुमहाञ्. M2 तस्मात् (for क°). D4 om. (hapl.) from मूर्छितैः up to कालः (in $53^{c}$). D5 -मूर्छितः; D9 -कर्शितैः; M2 -मूषितैः. — $^{c}$) D9 G1 M4 काल· (for कालः). K3 च (for ते). — $^{d}$) B0. 4. 5 पापानि; M4 धर्मेस्ति. D5 कस्यचित् (for कर्तृषु).

54 D9 reads 54 on marg. — $^{b}$) K3. 5 V1 B Da Dn1. n3 D2. 3. 5. 8 स हतो (for हिंसितो). M1. 3 पुनः (for मया). — $^{c}$) K3. 5 V1 B1–4 Da Dn1. n3 D3. 8 [अ]हं च (by transp.); D2 lacuna; D4 वाहं. — $^{d}$) B4 damaged. D4. 7 S (G3. 4 absent) बाधितव्या (for बन्धनीया). D5 महामते (for महीपते). K3. 5 B3 Dn1. n3 D2. 3. 8 हंतव्या हि नराधिप; V1 B1. 2 Da निहंतव्या नराधिप.

55 $^{c}$) K3 अथ; K5 V1 B Da Dn1. n3 D2. 3. 5. 8 T2 G1 यथा (for तथा). K1 D9 प्रकर्तव्यं (for प्रह°).

अहं हि पुत्रशोकेन कृतपापा तवात्मजे ।
तथा त्वया प्रहर्तव्यं मयि तत्त्वं च मे शृणु ॥ ५५
भक्षार्थं क्रीडनार्थं वा नरा वाञ्छन्ति पक्षिणः ।
तृतीयो नास्ति संयोगो वधबन्धादृते क्षमः ॥ ५६
वधबन्धभयादेके मोक्षतन्त्रमुपागताः ।
मरणोत्पातजं दुःखमाहुर्धर्मविदो जनाः ॥ ५७
सर्वस्य दयिताः प्राणाः सर्वस्य दयिताः सुताः ।
दुःखादुद्विजते सर्वः सर्वस्य सुखमीप्सितम् ॥ ५८
दुःखं जरा ब्रह्मदत्त दुःखमर्थविपर्ययः ।
दुःखं चानिष्टसंवासो दुःखमिष्टवियोगजम् ॥ ५९
वैरबन्धकृतं दुःखं हिंसाजं स्त्रीकृतं तथा ।
दुःखं सुखेन सततं जनाद्विपरिवर्तते ॥ ६०
न दुःखं परदुःखे वै केचिदाहुरबुद्धयः ।
यो दुःखं नाभिजानाति स जल्पति महाजने ॥ ६१
यस्तु शोचति दुःखार्तः स कथं वक्तुमुत्सहेत् ।
रसज्ञः सर्वदुःखस्य यथात्मनि तथा परे ॥ ६२

C. 12. 5199
B. 12. 139. 61
K. 12. 139. 61

—[d]) K2. 3. 5 V1 B1. 2 Dn1 n3 D2. 3. 8 तथा (for मयि). D7 तत्त्वेव (for तत्त्वं च). K3 वचः; D4. 9 हि मे (for च मे). Bo. 3-5 D5 तथा त्वं मे वचः शृणु; Da तथा त्वं च शृणुष्व मे.

56 [a]) V1 B1 D1 भक्ष्यार्थं; D5 पक्षार्थं. K4. 5 Dn1. n3 D2. 3. 8 च (for वा). —[b]) K3 V1 Bo. 4. 5 D5 पक्षिणं (for °णः). B1. 2 Da D4 M पक्षीनिच्छंति मानवाः (Da पक्षिणः); T1 G1. 2. 5 नर इच्छ(G2 °च्छं)ति पक्षिणः. —[d]) B1 क्षमाः; M2 क्षमं. D4 वधाद्बधादृतक्षमः (sic).

57 [a]) T2 अथ (for वध-). K2. 3. 5 V1 B Da Dn1. n3 D1. 3. 5. 8 एते (for एके). —[b]) Da लोक्यं (for मोक्ष-). T1 G1. 5 -तत्त्वम् (for -तन्त्रम्). K3. 5 V1 B1-4 Da Dn1. n3 D2. 3. 7. 8 T1 G1. 5 उपाश्रिताः (for °गताः). G2 मोक्ष्यंते त्वामुपाश्रिताः. —[c]) Ś1 D1 मरणोत्पादजं दुःखम्; K3 V1 Bo-2. 4. 5 Da1 D7 S (G3. 4 absent) जाती(Da1 जातिं; D7 T1 G1. 2. 5 जनी-; T2 जाते)मरणजं दुःखम्. —[d]) D8 om. (hapl.) from आहु up to दुःखं (in 59[a]). K5 B3 Dn1. n3 D2. 3. 5. 9 प्राहुर् (for आहुर्). K1. 3. 5 V1 B Da Dn1. n3 D2-5. 9 वेदविदो (for धर्म°). D7 S (G3. 4 absent) इत्याहुर्विदुषो जनाः.

58 D8 om. 58 (cf. v. l. 57). —[a]) G1 ददतः (for दयिताः). —[c]) T2 उद्व्यथते (for उद्विजते). V1 D7 T G1. 2. 5 M2 सर्वे. —[d]) D4 सर्वः सुखमभीप्सति.

59 D8 om. up to दुःखं (in 59[a]) (cf. v. l. 57). —[a]) D5 om. (hapl.) 59[a]-60[b]. M1 ब्रह्मदत्तं. —[b]) Bo. 3. 5 सर्व- (for अर्थ-). T2 G1 -विपर्ययं. —[c]) Ś1 K2. 4 D1 दुःखो हि; K1 V1 Da2 D9 दुःखश्च; Da1 D4 दुःखस्य (for दुःखं च). —[d]) T2 अर्थ- (for इष्ट-). K3 V1 Bo. 2 Da Dn1. n3 D1-3 8 -वियोजनं (for °गजम्).

60 D5 om. 60[ab] (cf. v. l. 59). —[a]) K3. 5 V1 B1. 2 Da Dn1. n3 D2. 3. 8 वध- (for वैर-). —[b]) Bo. 3-5 सहजं (for हिंसाजं). K3. 5 V1 B1. 2 Da Dn1. n3 D2 3. 7. 8 S (G3. 4 absent) स्त्रीकृतं सहजं तथा (K3 D2. 3. 8 यथा; G1 तदा); D4 वैरं हि सहजं तथा. —[c]) D4. 9 सुखं (for दुःखं). K5 Dn1. n3 D2. 3. 8 सुतेन; D4. 5. 7. 9 S (G3. 4 absent) दुःखेन (for सुखेन). T2 G1 सहजं (for सततं). —[d]) Bo. 3-5 Dn1. n3 D2. 3. 8 जनान्वि-; K5 D5 जनार्थे (for जनाद्वि-). K3 V1 B1. 2 D4 निवर्तति (K3 °र्तंत; D4 °र्तय) जनाधिप; D7 S (G3. 4 absent) विवर्धति नराधिप.

61 B4 damaged for 61[ab]. —[a]) V1 B1. 2. 5 D5. 7 T1 G1. 2. 5 -दुःखं वै; Da1 -दुःखेषु (for -दुःखे वै). K3 Bo. 3 न दुःखं परमं दुःखं; D4 न दुःखं न सुखं चापि; T2 M न (M1. 3 सु-) दुःखं परमन्वे(T2 °ले)ति. —[c]) M2 ये दुःखं नाभिजानंति. —[d]) Ś1 K1. 2. 4 D1. 4. 9 T2 G1. 2 M1. 3. 4 न (for स).

62 D7 S (G3. 4 absent) transp. 62[ab] and 62[cd]. —[a]) K3 यः सु-; B1 यश्च (for यस्तु). D9 जल्पति (for शोचति). D1 दुःखांतः. D4 दुःखार्तः सत्कथं वस्तुम्. —[b]) K1. 4 Da Dn3 D1. 9 T2 G2 वस्तुम् (for वक्तुम्). K2 उत्सहे. D4 उत्सहेत कथंचन. —After 62[ab], D7 T G2. 5 M ins. ([var.] 35):

343* भिन्नाः श्लिष्टा न शक्यन्ते शस्त्रैः सुनिशितैरपि ।
साम्ना तेऽपि निगृह्यन्ते गजा इव करेणुभिः ।

[(L. 1) T2 क्लिष्टा (for श्लिष्टा). —(L. 2) T2 M2 विनि-; M1. 3 हि नि-; M4 [ऽ]पि न (for ऽपि नि-).] —T2 G1 M4 read 62[cd] twice. —[c]) T2 (second

C. 12. 5200
B. 12. 139. 67
K. 12. 139. 68

यत्कृतं ते मया राजंस्त्वया च मम यत्कृतम् ।
न तद्वर्षशतैः शक्यं व्यपोहितुमरिंदम ॥ ६३
आवयोः कृतमन्योन्यं तत्र संधिर्न विद्यते ।
स्मृत्वा स्मृत्वा हि ते पुत्रं नवं वैरं भविष्यति ॥ ६४
वैरमन्तिकमासज्य यः प्रीतिं कर्तुमिच्छति ।
मृन्मयस्येव भग्नस्य तस्य संधिर्न विद्यते ॥ ६५
निश्चितश्चार्थशास्त्रज्ञैरविश्वासः सुखोदयः ।
उशनाश्चाथ गाथे द्वे प्रह्रादायाब्रवीत्पुरा ॥ ६६
ये वैरिणः श्रद्दधते सत्ये सत्येतरेऽपि वा ।
ते श्रद्दधाना वध्यन्ते मधु शुष्कतृणैर्यथा ॥ ६७
न हि वैराणि शाम्यन्ति कुलेष्वा दशमाद्युगात् ।
आख्यातारश्च विद्यन्ते कुले चेद्विद्यते पुमान् ॥ ६८
उपगुह्य हि वैराणि सान्त्वयन्ति नराधिपाः ।
अथैनं प्रतिपिंषन्ति पूर्णं घटमिवाश्मनि ॥ ६९
सदा न विश्वसेद्राजन्पापं कृत्वेह कस्यचित् ।
अपकृत्य परेषां हि विश्वासाद्दुःखमश्नुते ॥ ७०

---

time ) M2 रसज्ञा. D7 G1 ( first time ). 2. 5 तस्य ; T1. 2 ( both times ) G1 ( second time ) M ( M4 first time ) स्वस्य ( for सर्व- ). Da -भूतस्य ; D9 -दुःखानां. — After 62, G1 reads 35.

63 [a] ) M1. 3 महाराजंस्. — [b] ) T2 G1 तथा ( for त्वया ). T2 G1 तत् ( for यत् ). — [c] ) K3 च ( for तद् ). — [d] ) D7 S ( except M2 ; G3. 4 absent ) अपोहितुम् ( for व्यपो° ). D4 G1 अरिंदमः.

64 [a] ) T2 G1 आवाभ्यां ( for आवयोः ). M2 अन्योन्ये. — [b] ) K2. 5 B4 Dn1. n3 D2. 3. 5. 8 पुनः ; D7 S ( G3. 4 absent ) तस्य ; D9 अत्र ( for तत्र ). — D8 G2 om. ( hapl. ) 64[c]–65[d]. — [c] ) Da1 हि तं ; D4 हंत ; D9 हतं ( for हि ते ). — [d] ) K4 Da न वै ; B1 नव- ; D4 न च ; M2 न वा ( for नवं ).

65 D8 G2 om. 65 ( cf. v. l. 64 ). — [a] ) Ś1 K1. 2. 4 D1. 5 अंतकम् ; T2 G1 अत्यंतम् ( for अन्तिकम् ). K3. 5 V1 Bo–2 Da Dn1. n3 D2–4. 7. 9 T1 G5 आसाद्य ( for आसज्य ). D5 वैरमांत्यंतिकासह्यं. — [b] ) B3 अर्च्छति ; B4. 5 अर्हति ( for इच्छति ). — [c] ) D4 मृन्मनस्य ; T2 G1 मृण्मयस्य. G5 [ए]व ( for [इ]व ). M2 चंद्रस्य ( for भग्नस्य ). D9m पक्वभांडस्य भग्नस्य. — [d] ) K2. 3. 5 B ( except Bo ) Dn1. n3 D2. 3. 5 यथा ( for तस्य ).

66 [a] ) D4 निश्चयश् ( for निश्चितश् ). D1 चाथ ( for चार्थ- ). K2. 5 V1 B1. 2 Da Dn1. n3 D2. 3. 7. 8 S ( G3. 4 absent ) निश्चयश्चा( K2. 5 Dn1. n3 D2. 3. 8 G2 °यः स्वा- ; T2 G1 °यज्ञा- ; M2 °यं चा )र्थशास्त्रेषु ; D5 निश्चितार्थार्थतत्त्वज्ञैर् ; D9 °तस्यार्थतत्त्वज्ञैर्. — [b] ) Bo. 3. 4 D5. 7 S ( G3. 4 absent ) न विश्वासः ( for अवि° ). G1 सुखोदयं. K2. 5 Dn1. n3 D2. 3. 8 विश्वासश्चासुखोदयः. — [c] ) K ( except K4 ) Bo. 3–5 Dn1. n3 D2–5. 8. 9 चैव ; V1 B1. 2 Da द्वे तु ; D7 T1 G1. 2. 5 M त्वथ ; T2 चाद्व ( for चाथ ). V1 B1. 2 Da वै ( for द्वे ). — [d] ) Some MSS. प्रह्लादाय. Da तदा ( for पुरा ).

67 [a] ) B4 damaged. Ś1 K1. 4 D1 वैरिणं ; K3 D9 M1. 3 °णि ( for °णः ). B1. 2 श्रद्दधति ; M4 °धंते. ❀ Cn : वैरिणः, वाक्ये इति शेषः । ❀ — [b] ) D5 om. सत्ये. D4 सत्येसत्ये परेपरे. — [c] ) D9 तैः ( for ते ). K4 वध्यंते ( for वध्यन्ते ). K2. 5 V1 B1. 2 Da Dn1. n3 D2. 3. 7. 8 S ( G3. 4 absent ) वध्यं( T1 पच्यं )ते श्रद्दधानास्तु ( B1. 2 Da °नास्ते ; D7 T G1. 2. 5 M1–3 °ना हि ; M4 °नाश्च ). — [d] ) B1 शुल्कैस् ( for शुष्क- ). D7 S ( G3. 4 absent ) इव ( for यथा ). ❀ Cv : शत्रुणा दर्शितं पुरःस्थितं मधु श्रद्दधानाः शुष्कतृणैश्छन्ने प्रपाते यथा पतन्ति तद्वदेतदित्यर्थः । ❀

68 = ( var. ) 5. 70. 62. G2 om. 68. — [a] ) B1. 2 Da शाम्यंते. — [b] ) K3. 5 Dn1. n3 D2. 3. 5. 8 कुले दुःखगतानि च ; Da कुलेष्वा दशमामुयात्. — [c] ) B2 व्याख्यातारश्च ; Da1 आख्यातारस्य. — [d] ) K5 B4. 5 Dn1. n3 D2. 3. 8 वै ध्रियते ; V1 B1. 2. 5 Da चेद्रियते ; D4 वै विद्यते ; D7 T G1. 5 चेज्जायते ; M वै जायते ( for चेद्विद्यते ). D4 सुतान् ( for पुमान् ).

69 D5 om. 69. — [a] ) K3 D1. 9 उपगूह्य ; K4. 5 V1 B Da Dn1. n3 D2–4. 8 उपगृह्य ; D7 S ( G3. 4 absent ) उपा( D7 T1 G5 अपा- ; G1 उप )कृत्य ( for उपगुह्य ). K5 V1 B1. 2. 4 Da Dn1. n3 D2. 3. 8 तु ( for हि ). — [b] ) K2 Dn1 नराधिप ; B2 °धिपः. — [c] ) Ś1 K1. 2. 4 [ए]कं ; B1. 2 [ए]तं ( for [ए]नं ). Bo. 3–5 D7 T G2. 5 M -हिंसंति ; G1 lacuna ( for -पिंषन्ति ). — [d] ) B2 D4. 9 कुंभम् ( for घटम् ). M1. 3 [आ]त्मनि ( for [अ]श्मनि ).

70 [a] ) K5 V1 B ( B4 damaged ) Da Dn1. n3

ब्रह्मदत्त उवाच ।
नाविश्वासाच्चिन्वतेऽर्थान्नेहन्ते चापि किंचन ।
भयादेकतरान्नित्यं मृतकल्पा भवन्ति च ॥ ७१
पूजन्युवाच ।
यस्येह व्रणिनौ पादौ पद्भ्यां च परिसर्पति ।
क्षण्येते तस्य तौ पादौ सुगुप्तमभिधावतः ॥ ७२
नेत्राभ्यां सरुजाभ्यां यः प्रतिवातमुदीक्षते ।
तस्य वायुरुजात्यर्थं नेत्रयोर्भवति ध्रुवम् ॥ ७३
दुष्टं पन्थानमाश्रित्य यो मोहादभिपद्यते ।
आत्मनो बलमज्ञात्वा तदन्तं तस्य जीवितम् ॥ ७४
यस्तु वर्षमविज्ञाय क्षेत्रं कृषति मानवः ।
हीनं पुरुषकारेण सस्यं नैवाप्नुते पुनः ॥ ७५
यश्च तिक्तं कषायं वाप्यास्वादविधुरं हितम् ।
आहारं कुरुते नित्यं सोऽमृतत्वाय कल्पते ॥ ७६

C. 12. 5213
B. 12. 139. 8(
K. 12. 139. 8

D2. 3. 5. 8 राजा (for राजन्). — c) D5 अपहृत्य (for °कृत्य). Dn3 च (for हि). — d) K3 D4. 9 M3 आप्नुयात्; D7 T G1. 2. 5 M1. 2. 4 आप्नुते (for अश्नुते).

71 a) Ś1 K1 न विश्वासश्च; K4 नाविश्वासाश्च; D1. 4 न विश्वासाच् (for नाविश्वासाच्). K3 D4 T1 G2. 5 M चिनोति; K5 V1 B1. 3. 4 Da2 Dn1. n3 D2. 3. 5. 8 विंदते; D7 G1 छिनोति (for चिन्वते). B1. 3 ह्यर्थान्; T1 G1. 2. 5 M1. 3 अर्थं (for ऽर्थान्). B0. 5 विश्वासाद्विंदते ह्यर्थान्; B2 Da1 ना(Da1 न)विश्वासार्थिनो- (Da1 °ना)त्यर्थान्; T2 विश्वासाद्विद्धि नोत्यर्थान्. — b) K5 Dn3 D2 ईहते; Dn1 D3. 8 ईहंते (for नेहन्ते). D1 वापि. K3 D4 न वापीहत किंचन; V1 B1. 2 न चापीहंति किं°; B0. 3–5 ईहते च कथंचन; Da2 या वाचापीति किंचन; D7 S (G3. 4 absent) न चापीह- (T2 °प्यहं)ति किंचन (G2 M कश्चन); D9 नाहं नैवापि किं°. — c) Ś1 K1–4 D1. 4. 5 भयं (for भयाद्). Ś1 K1. 2 D1. 5 त्वेकवशं; K3 B1 T2 M त्वेकतरं; B3. 5 चैकतरान्; Da T1 G5 वैकतरान्; D6 न कतरं; D7 G2 चैकतरं; D9 त्वेकरतं; G1 चैव करं (sic) (for एकतरान्). D7 S (G3. 4 absent) मित्रं (for नित्यं). ❀ Cv (reading भयात्त्वेकतरं मित्रे): मित्रे मयि एकतरं अर्थसंचयं वा तूष्णीमवस्थानं वा भवती प्रयातु । ❀ — d) D7 S (G3. 4 absent) Cv कृतकृत्या (for मृतकल्पा). D7 T G1. 2. 5 भव(T2 G2 °वं)त्विह (for °न्ति च).

72 D1. 7 G2 om. the ref. Ś1 K1. 4 पूतनी (for पूजनी). — a) D9 हि (for [इ]ह). V1 B1. 2 Da D9 T1 G2. 5 व्रणितौ; D1 व्रजिनौ; D7 G1 प्रणितौ; T2 प्रणतौ; M2 प्रतितो (sic) (for व्रणिनौ). — b) V1 B0. 3. 5 वि- (for च). K3 B1. 2 Da D4 -धावति; D7 T1 G1. 2. 5 M -धावतः; D9 -सर्पभिः (sic); T2 -भावतः (for -सर्पति). — c) K3 D4 क्षिणोति; K4 स्त्वण्येते (sic); K5 V1 B Da Dn1. n3 D2. 3. 5. 8 खन्येते; D1 क्षायिते; D7 T2 M2–4 क्षिण्येते; D9 क्षणिनौ; T1 G1. 2. 5 क्षुण्ये(G1 °ण्य)ते (for क्षण्येते). Da वै पादौ; D7 T2 पादौ तौ (by transp.). — d) K3 V1 B1. 2 Da Dn1 D4 सुगुप्तान् (for °प्तम्). K5 B4 Dn3 D1–3. 8 इह; V1 B0–3. 5 Da Dn1 D7. 9 T G1. 2. 5 अपि; D4 अति-; D5 इव (for अभि-).

73 a) D5 सरजोभ्यां; M2 सुरुजाभ्यां. — b) Da1 प्रतिवाचम्; G1 °यातम्; G2 °घातम्; M1. 3 प्रत्यादित्यं; M2. 4 प्रतिपादम् (for °वातम्). Ś1 उद्वीक्षते; M1–3 निरी° (for उदी°). — c) Dn1 D8 वायू; D5 वाद्यु; M चापि (for वायु-). K1 [अ]त्यर्क्तं; Da D7 S (G3. 4 absent) नित्यं (for [अ]त्यर्थं). — d) B1. 2 ध्रुवा.

74 a) Da दुष्ट-; G1 M3 इष्टं. K2. 5 V1 B1. 2 Da Dn1. n3 D2. 3. 7. 8 T G1. 2. 5 आसाद्य (for आश्रित्य). — b) K2. 3. 5 Dn1. n3 D2–4. 8. 9 उप- (for अभि-). K3 D4. 9 -गच्छति (for -पद्यते). — c) K2. 3. 5 V1 B D (except D9; Dn2 D6 absent) T1 G5 M4 अज्ञा(D5 °दा)य; M2 आज्ञाय (for अज्ञात्वा). — d) M2 जनितं (for तदन्तं).

75 D5 om. (hapl.) 75a–76b. — a) K3 D4. 9 च (for तु). D9 T2 कर्षम् (for वर्षम्). D1 अभिज्ञाय. — b) K1 कृशति; K2–5 V1 B (except B3) D (except D9; D5 om.; Dn2 D6 absent) T G2. 5 M कर्षति; G1 वर्षति (for कृषति). K2 Da कर्षकः (for मानवः). — c) K (except K1) B2–4 Da Dn1. n3 D2. 3. 7–9 S (G3. 4 absent) हीनः (for हीनं). M2 पुरुषकारैश्च. — V1 reads 75d–77d on marg. — d) B1 शस्यं; M4 सस्यान्. D1 वैव; M वै न (for नैव). K2. 5 V1 B0. 2. 4 Da Dn3 D2. 3. 8 [अ]श्नुते; M2 [अ]प्सते (sic) (for [आ]प्नुते). K2. 5 V1 B Da Dn1. n3 D2–4. 8. 9 M ततः (for पुनः). D7 T G1. 2. 5 तस्य वै नाप्नुते फलं.

76 D5 om. 76ab (cf. v. l. 75). V1 reads 76 on marg. — a) K2. 5 V1 B Da Dn1. n3 D2–4. 8. 9

C. 12. 5214
C. 12. 139. 81
K. 12. 139. 81

पथ्यं भुक्त्वा नरो लोभाद्योऽन्यदश्नाति भोजनम् ।
परिणाममविज्ञाय तदन्तं तस्य जीवितम् ॥ ७७

दैवं पुरुषकारश्च स्थितावन्योन्यसंश्रयात् ।
उदात्तानां कर्म तत्त्रं दैवं क्लीबा उपासते ॥ ७८

कर्म चात्महितं कार्यं तीक्ष्णं वा यदि वा मृदु ।
ग्रस्यतेऽकर्मशीलस्तु सदानर्थैरकिंचनः ॥ ७९

तस्मात्संशयितेऽप्यर्थे कार्य एव पराक्रमः ।
सर्वस्वमपि संत्यज्य कार्यमात्महितं नरैः ॥ ८०

विद्या शौर्यं च दाक्ष्यं च बलं धैर्यं च पञ्चकम् ।
मित्राणि सहजान्याहुर्वर्तयन्तीह यैर्बुधाः ॥ ८१

निवेशनं च कुप्यं च क्षेत्रं भार्या सुहृज्जनः ।
एतान्युपचितान्याहुः सर्वत्र लभते पुमान् ॥ ८२

सर्वत्र रमते प्राज्ञः सर्वत्र च विरोचते ।
न विभीषयते कंचिद्भीषितो न बिभेति च ॥ ८३

नित्यं बुद्धिमतो ह्यर्थः स्वल्पकोऽपि विवर्धते ।
दाक्ष्येण कुरुते कर्म संयमात्प्रतितिष्ठति ॥ ८४

---

T G2. 5 M यस्तु; K3 यच्च; D7 G1 वस्तु (for यश्च). D4. 9 त्यक्तं; T2 तिक्त-. D9 कखायं. — $^{b}$) K1. 4 D4. 9 [अ]प्यास्वादु; K2. 5 V1 B Da Dn1. n3 D2. 3. 8 स्वादु वा; D7 S (G3. 4 absent) ह्यास्वा(M2 °पा)द्य (for [अ]प्यास्वाद-). K1 -विपुलं; K2. 4. 5 V1 B D (D5 om.; Dn2 D6 absent) S (G3. 4 absent) मधुरं (for -विधुरं). M4 कृतं (for हितम्). — $^{c}$) D4 आहाराः; D9 आकारं.

77 V1 reads 77 on marg. — $^{a}$) K3 D9 त्यक्त्वा; K5 V1 B0 Da Dn1 D3. 4. 8 M1. 3. 4 मुक्त्वा; D5 कृत्वा; M2 मत्वा (for भुक्त्वा). K1 परो लोभाद्; K5 V1 B1. 2 Da Dn1. n3 D2. 3. 8 तु यो मोहाद्; D7 T G1. 2. 5 M1–3 नरो योन्यो (G2 M1–3 °न्यल्र्); M4 नरोन्योन्यं (for नरो लोभाद्). — $^{b}$) K5 Dn1. n3 D2. 3. 8 दुष्टम्; V1 B1. 2 Da अन्यद्; D7 S (G3. 4 absent) लोभाद् (for योऽन्यद्). — $^{c}$) G1. 2 परिमाणम्; M1 परीणामम्. — $^{d}$) D1 उदक्यं (sic) (for तदन्तं).

78 $^{a}$) D7 T2 M4 पुरुषकारं. — $^{b}$) D1 -संशयात्; G2 -संश्रयः. — $^{c}$) K1. 5 V1 B2 Da Dn1. n3 D2. 3. 8 उदाराणां; K2 D1 तदात्ता(D1 °दंता)नां; K3 D4 उद्यतानां; K4 तदांतानां; B0. 1. 3–5 D5 उत्तमानां (for उदात्तानां). K5 Dn1. n3 D2. 3. 8 तु सत्कर्म; V1 B1. 2 Da कर्म तत्र; B0. 3–5 तत्र कर्म (for कर्म तत्त्रं). D7 S (G3. 4 absent) उदात्तं कर्म वै तत्र. — $^{d}$) V1 Da क्लैब्याद्; B4 क्रीडा; D1 क्लीब; Cv किं वा (for क्लीबा).

79 $^{a}$) B1 चात्र; D4 वात्म-; T2 चार्य- (for चात्म-). — 79$^{cd}$ damaged in B4. — $^{c}$) K4 गम्यते; Da ग्रसते; G2 गृह्यते (for ग्रस्यते). M4 -शीलं. B2 च (for तु). — $^{d}$) Dn3 सदानार्थैर्.

80 $^{a}$) B0. 5 तत्र; B3 ततः (for तस्मात्). K4 [अ]र्थे. K1 V1 B1. 2 Da D7 S (G3. 4 absent) तस्मात्संश(G2 तस्मात्साध)यितव्येर्थे (B1. 2 Da °व्यार्थे); K5 Dn1. n3 D2. 3. 8 तस्मात्सर्वं व्यपोह्यार्थं; D5 ततः प्रशमितेप्यर्थे. — $^{d}$) Da2 आत्महितैर्.

81 $^{a}$) K3 V1 विद्यां. T1 G1. 2. 5 M शौचं; T2 धैर्यं (for शौर्यं). D2 दक्ष्यं (for दाक्ष्यं). D9 ते (for the second च). — $^{b}$) B4 चैश्वर्यं-; Dn3 धर्म्यं च; D7 S (G3. 4 absent) शौर्यं च (for धैर्यं च). — D4 om. (hapl.) 81$^{d}$–82$^{c}$. — $^{d}$) K1 वर्धयंति; T2 विज° (for वर्त°). K2. 3 D2 ते; K5 Dn1. n3 D3. 8 तैर्; B1 Da ये (for यैर्). D1 बुधः.

82 D4 om. 82$^{abc}$ (cf. v. l. 81). — $^{a}$) D9 न (for the first च). G2 कूप्यं. ❀ Cv: कुप्यमन्यद्धनं भवेदिति वचनाद्रूप्यहेमव्यतिरिक्तगोधान्यादि धनं कुप्यम् । ❀ — $^{b}$) Da क्षेत्रभार्या-; D7 T1 G1. 2. 5 भार्यां क्षेत्रं; T2 M भार्या क्षेत्रं (by transp.). K4. 5 V1 B1 Da D1 सुहृज्जनाः; B0. 3–5 °त्तमः; D7 T1 G1. 2. 5 M2 °ज्जनं (for °ज्जनः). — $^{c}$) B4 damaged from चिता up to रमते (in 83$^{a}$). K1. 3. 5 V1 B1. 2. 5 Dn1. n3 D2. 3. 7–9 T1 G5 Cn उपहितानि; B4 प्रिय***; Da1 अपहितानि; Da2 अपगतानि; D4 प्रियहितानि (for उपचितानि). D9 आशु (for आहुः). B0. 3 एतान्प्रियहितान्प्राज्ञः. — D9 om. (hapl.) 82$^{d}$–83$^{a}$.

83 B4 damaged up to रमते. D9 om. 83$^{a}$ (cf. v. l. 82). — $^{a}$) K1 प्राज्ञ. — $^{b}$) K2. 5 Dn1. n3 D2–5. 8. 9 विराजते (for विरोचते). — $^{c}$) Da D4. 5. 7. 9 S (G3. 4 absent) च (for वि-). K3 V1 B2 Da D4. 7. 9 T G1. 2. 5 किंचिद्; K5 B0. 1 Dn1. n3 D2. 3. 5. 8 कश्चिद् (for कंचिद्). — $^{d}$) D1 भीषतो; D7 भीषते (for भीषितो). G1 बिभेद (for °ति).

84 $^{a}$) D9 बुद्धिमतौ; M1 °हतो. K5 V1 B1. 2 Da Dn1. n3 D2. 3. 8 [ऽ]पि (for हि). — $^{b}$) K4 स्वर्गको;

गृहस्नेहावबद्धानां नराणामल्पमेधसाम् ।
कुस्त्री खादति मांसानि माघमा सेगवामिव ॥ ८५
गृहं क्षेत्राणि मित्राणि स्वदेश इति चापरे ।
इत्येवमवसीदन्ति नरा बुद्धिविपर्यये ॥ ८६
उत्पतेत्सरुजाद्देशाद्व्याधिदुर्भिक्षपीडितात् ।
अन्यत्र वस्तुं गच्छेद्वा वसेद्वा नित्यमानितः ॥ ८७
तस्मादन्यत्र यास्यामि वस्तुं नाहमिहोत्सहे ।
कृतमेतदनाहार्यं तव पुत्रेण पार्थिव ॥ ८८
कुभार्यां च कुपुत्रं च कुराजानं कुसौहृदम् ।
कुसंबन्धं कुदेशं च दूरतः परिवर्जयेत् ॥ ८९
कुमित्रे नास्ति विश्वासः कुभार्यायां कुतो रतिः ।
कुराज्ये निर्वृतिर्नास्ति कुदेशे न प्रजीव्यते ॥ ९०
कुमित्रे संगतं नास्ति नित्यमस्थिरसौहृदे ।
अवमानः कुसंबन्धे भवत्यर्थविपर्यये ॥ ९१
सा भार्या या प्रियं ब्रूते स पुत्रो यत्र निर्वृतिः ।
तन्मित्रं यत्र विश्वासः स देशो यत्र जीव्यते ॥ ९२

C. 12. 5229
B. 12. 139. 96
K. 12. 139. 97

D1 स्वगतो (for स्वल्पको). D5 वादि (sic) (for ऽपि वि-). D4. 9 विवर्धत (D9 °तैः). — c) B1-4 Da Dn3 D1. 3. 8. 9 दाक्षेण (D1 °न). K1. 3 V1 Bo-4 D4. 9 M2 कुर्वतः; K5 B5 Da Dn1. n3 D2. 3. 5. 8 [अ]कुर्वतः; D7 T G1. 2. 5 M1. 3. 4 कुर्वतां (T2 °ता) (for कुरुते). — d) B2 संशयात्; D4 संयमान् (for °मात्). K1. 3 V1 B1. 2 Da D9 प्रतितिष्ठतः.

85 a) T2 शृणु (for गृह-). D1 -स्नेहस्व-; D4 -स्नेहा च (for -स्नेहाव-). Da -रुद्धानां (for -बद्धानां). — b) D1 -मित्रसां (sic); T2 -चेतसां (for -मेधसाम्). — c) Da2 षादति. — With 85d, cf. 6. 114. 60 and note. B4 damaged for 85d-86a. — d) K1 D1 माघो मा; K5 Dn1. n3 माघमां (for माघमा). K1 सोघवान्; K2 Dn1 D9 सो(Dn1 शै)गवाम्; K3. 5 Dn3 D2. 3. 8 सेगवा (for सेगवाम्).

86 B4 damaged for 86a. — a) B1. 2 Da1 D5 गृह-; B3 गृही (for गृहं). — b) Ś1 K1. 2. 4 D1. 4 स्वदेह; M2 °शम् (for °देश). D1 om. from चापरे up to नित्य (in 87d). — d) D9 मति- (for बुद्धि-).

87 D1 om. up to नित्य (cf. v. l. 86). V1 reads 87-91 on marg. — a) B1 उत्पातात् (for उत्पतेत्). V1 B1-3 Dn1 सहजाद्; T2 सरुताद् (for °जाद्). D5 उत्पद्यते रुजा व्याधिर्; D7 T1 G1. 2. 5 उत्पथाच्च विमानाच्च. — b) D7 T1 G1. 2. 5 देशाद् (for व्याधि-). Dn3 M2. 4 -पीडितान्; T2 -पीडनात्. D5 दुर्भिक्षाच्चैव पीडितान्. — c) K3 D4. 9 रोचेत (for गच्छेद्वा). D7 S (G3. 4 absent) अन्यत्र वसतिं (T2 M1-3 °सितुं) गच्छेद्. — d) Ś1 K1. 2. 4 D1 -मन्यतः (D1 °ता) (for -मानितः).

88 V1 reads 88 on marg. — a) Ś1 K4 D1 गच्छामि (for यास्यामि). — b) D1 नार्यम् (for नाहम्). — c) K3 एव (for एतद्). K3 तदाकार्यं; K5 V1 Dn1. n3 D2. 3. 8 अनार्यं मे (for अनाहार्यं). — d) K5 Dn1. n3 D1-3. 8 पुत्रे च (for पुत्रेण). D1 पार्थिवः.

89 V1 reads 89 on marg. — a) Ś1 K1. 4 V1 B1. 2 D1. 4. 9 कु(B2 स)मित्रं (for कुपुत्रं). — b) V1 B1. 2 Da कुसंबंधं (for कुराजानं). — c) V1 B1. 2 Da कुराजानं (for कुसंबन्धं). D7 T1 G1. 2. 5 कुदेशं च कुसंबंधं.

90 V1 reads 90 on marg. — a) K1-3. 5 V1 Da Dn1. n3 D2. 3. 5. 7. 9 T1 G5 कुपुत्रे (for कुमित्रे). — b) K3 D9 सुखं (for रतिः). — c) V1 Bo. 5 कुराज्ञि; T2 °ष्ट्रे; M1. 3. 4 °जे (for °ज्ये). D7 T1 G1. 2. 5 कुराजनि धृतिर्नास्ति. — d) K1 D7 S (G3. 4 absent) प्रजीवति; K3. 5 V1 B Da Dn1. n3 D2. 3. 5. 8 [अ]स्ति जीविका; K4 lacuna; D9 च जीव्यते (for प्रजी°). — After 90, Ś1 K2. 4 D1 read 93.

91 V1 reads 91 on marg. — a) Ś1 (*sup. lin.*) कुपुत्रे (for कुमित्रे). K1. 2. 5 V1 B Da Dn1. n3 D2. 3. 5. 8 संगतिर्; D1 संवृतं (for संगतं). D7 S (G3. 4 absent) कुपुत्रे सौहृदं नास्ति. — b) K4 -सौहृदं. — c) K1 B2 अवमानं; V1 Bo. 4. 5 D1. 5 M1 अपमानः (for अव°). — d) K1 अर्थं; D2 अर्थो (for अर्थ-).

92 a) K3 Da G1 स; Dn3 स्व- (for सा). G1 M3 याः. D9 वक्ति (for ब्रूते). — b) G1 सुपुत्रो; M4 सपुत्रे. T2 स पुत्रो यस्तु सुव्रतः. — c) D4 यश्च (for यत्र). — d) K3 Bo D7 S (G3. 4 absent) जीवति (for जीव्यते).

93 Ś1 K2. 4 D1 read 93 after 90. — a) V1 यस्य (for यत्र). — b) D4 न (for स). D7 -शासकः (for °नः). — c) K5 B3. 4 Dn1. n3 D2. 3. 8 भीरेव; V1 Bo. 2. 5 Da D9 स चैव; D4 सदैव; D5 भीरौ च; D7 स

C. 12. 5898
B. 12. 158. 22
K. 12. 156. 21

एतानशिष्टान्बुध्यस्व नित्यं लोभसमन्वितान् ॥ १९
शिष्टांस्तु परिपृच्छेथा यान्वक्ष्यामि शुचिव्रतान् ।
येषु वृत्तिभयं नास्ति परलोकभयं न च ॥ २०
नामिषेषु प्रसङ्गोऽस्ति न प्रियेष्वप्रियेषु च ।
शिष्टाचारः प्रियो येषु दमो येषु प्रतिष्ठितः ॥ २१
सुखं दुःखं परं येषां सत्यं येषां परायणम् ।
दातारो न गृहीतारो दयावन्तस्तथैव च ॥ २२
पितृदेवातिथेयाश्च नित्योद्युक्तास्तथैव च ।
सर्वोपकारिणो धीराः सर्वधर्मानुपालकाः ॥ २३
सर्वभूतहिताश्चैव सर्वदेयाश्च भारत ।
न ते चालयितुं शक्या धर्मव्यापारपारगाः ॥ २४
न तेषां भिद्यते वृत्तं यत्पुरा साधुभिः कृतम् ।
न त्रासिनो न चपला न रौद्राः सत्पथे स्थिताः ॥ २५
ते सेव्याः साधुभिर्नित्यं येष्वहिंसा प्रतिष्ठिता ।
कामक्रोधव्यपेता ये निर्ममा निरहंकृताः ।
सुव्रताः स्थिरमर्यादास्तानुपास्स्व च पृच्छ च ॥ २६
न गवार्थं यशोर्थं वा धर्मस्तेषां युधिष्ठिर ।
अवश्यकार्य इत्येव शरीरस्य क्रियास्तथा ॥ २७

---

चाल्प- (for लुब्ध-). — e) G2 एकान् (for एतान्). Da शिष्टान् (submetric); D7 अरिष्टान् (for अशिष्टान्). — f) D5 नित्य- (for नित्यं).

20 a) Bo. 2. 3. 5 Da D5. 7 G2 च (for तु). — b) Bo. 4. 5 D5 यद्; M3. 4 तान् (for यान्). D5 पश्यामि (for वक्ष्यामि). V1 B1 शुभव्रतान्; D4 शुचिव्रत; T2 श्रुतव्रतान्; G1 शुभावृतान् (for शुचिव्रतान्). — c) V1 Dn1 D2. 3. 8 येषां (for येषु). K1 M1. 3 [अ]वृत्ति-; B Da Dn3 D5. 7 T1 G2. 5 M2 [आ]वृत्ति- (for वृत्ति-). — d) D1 परलोकं; T2 M3 °लोके (for °लोक-). M2 -क्षयं (for -भयं).

21 B4 partly damaged. — a) B1 नामित्रेषु; D1 नामिशेषु; D4 नापि येषु (for नामिषेषु). V1 B1. 2. 5 Da1 D7 S (G3. 4 absent) च संगोस्ति; D5 प्रसंगो वा (for प्रसङ्गोऽस्ति). — b) Bo D1 प्रियेषु (for [अ]प्रि°). D1 om. च. K3 V1 B1–3. 5 Da1 D5. 7. 9 S (G3. 4 absent) नाप्रियेषु (B2 °ये च) प्रियेषु च (D5 वा). — c) K3 Da2 शिष्टाचारं (K3 °र-) (for °चारः). K (except K5) V1 B (except B2) D1. 4 परो; D5 परा (for प्रियो). — d) V1 Bo. 4. 5 सुखदुःख-; D5 ** सुख- (for दमो येषु).

22 a) G1 M1 सुख- (for सुखं). K3. 5 Bo. 3. 5 Dn1. n3 D2. 3. 5. 8 G2 दुःखं समं; D7 T1 G5 दुःखपरं (for दुःखं परं). V1 B1. 2. 4 Da D4 T2 सुखदुःखे समे येषां; M2 सुखदुःखपरो येषां; M3 सुखदुःखं वरं येषां. — b) B1. 2 येषां सत्यं (by transp.). — D5 om. 22c–23b. — c) Ś1 K1 T2 G1 [ऽ]नुगृ(K1 G1 °ग्र)हीतारो; V1 B1–5 Da न ग्रही° (for न गृही°).

23 D5 om. 23ab (cf. v. l. 22). — a) Ś1 K2. 4 D1 पितृलोकातिथेयाश्च; T2 G1 पितृदेवाश्च ये प्रोक्ता. — c) K5 B1 Dn1. n3 D5 T2 G1 वीराः (for धीराः). Da सर्वधर्मोपकरणाः. — d) D5 स्वस्व- (for सर्व-). Bo. 5 -धर्मार्थ-; D7 -कर्मानु- (for -धर्मानु-).

24 a) M2 -भूतानताश् (for -भूतहिताश्). — b) Ś1 K4 D1 सर्वोपेयाश्; M4 सर्वदेवाश् (for °देयाश्). — c) G1 पालयितुं (for चाल°). — d) Bo. 5 D7 S (G3. 4 absent) धर्मव्याहार- (for °व्यापार-). K2. 3. 5 V1 B Dn1. n3 D2–5. 7–9 S (G3. 4 absent) -कारिणः; Da -कांक्षिणः (for -पारगाः).

25 a) K3 V1 Bo–3 Da1 विद्यते (for भि°). — b) B1 कृतः. — c) D7 G2 तत्रासीना; T G1. 5 न त्रासी(T2 G1 °सि)ना (for न त्रासिनो). D7 T G2. 5 अचपला (for न च°). B2 Da गुरुभक्ता ह्यचपला. — d) Da D7 T1 G2. 5 अरौद्राः; G1 नाभद्राः (for न रौद्राः). B1 T2 M सत्पथि; D1. 4 G1 सत्पथ- (for °थे).

26 a) V1 B1. 2 Da सेव्यास्ते (by transp.). — b) Dn3 D8 अहिंसाः. K3 Dn3 D8. 9 प्रतिष्ठिताः; K4 °ष्ठता (for °ष्ठिता). D7 S (G3. 4 absent) असाधूंश्च विव(G1 °स)र्जयेत्. — c) V1 B1. 2 Da वै (for ये). — d) K2 निर्मम-; G1 निर्ममं (for °मा). — e) Ś1 D1 सव्रताः; D5 अव्रताः; D7 T1 G5 सुवृत्ताः; T2 G1 सुव्रता; G2 सुवृत्ता (for सुव्रताः). G1 स्थित- (for स्थिर-). M2 -मर्यादस् (for °दास्).

27 a) K5 V1 B Da Dn1. n3 D2. 3. 5. 8 M2 धनार्थं; D4 वागर्थं च (hypermetric); D7. 9 T G1. 2. 5 M1. 3. 4 वागर्थं (for गवार्थं). — b) B1 om. (hapl.) from धर्म up to न (in 28c). V1 Bo. 3–5 D5 विशां पते; B2 नराधिप; Da नराधिपाः (Da1 °पः) (for युधिष्ठिर). — c) K5 V1 Dn1. n3 D2–5. 8. 9 अवश्यं; G2 अव * (for अवश्य-). D7 S (G3. 4 absent) -का-

न भयं क्रोधचापल्यं न शोकस्तेषु विद्यते ।
न धर्मध्वजिनश्चैव न गुह्यं किंचिदास्थिताः ॥ २८
येष्वलोभस्तथामोहो ये च सत्यार्जवे रताः ।
तेषु कौन्तेय रज्येथा येष्वतन्द्रीकृतं मनः ॥ २९
ये न हृष्यन्ति लाभेषु नालाभेषु व्यथन्ति च ।
निर्ममा निरहंकाराः सत्त्वस्थाः समदर्शिनः ॥ ३०
लाभालाभौ सुखदुःखे च तात
प्रियाप्रिये मरणं जीवितं च ।
समानि येषां स्थिरविक्रमाणां
बुद्धात्मनां सत्त्वमवस्थितानाम् ॥ ३१
सुखप्रियैस्तान्सुमहाप्रतापा-
न्यत्तोऽप्रमत्तश्च समर्थयेथाः ।
दैवात्सर्वे गुणवन्तो भवन्ति
शुभाशुभा वाक्प्रलापा यथैव ॥ ३२

C. 12. 5911
B. 12. 158. 35
K. 12. 156. 34

इति श्रीमहाभारते शान्तिपर्वणि द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

---

र्यम् (for -कार्यं). Bo. 2-5 Da धर्मस्यार्थ(B3. 5 Da °थ)प्रवृत्तिश्च. — d) K3 D4. 7 S (G3. 4 absent) क्रिया (M3 °यां) यथा; Dn3 कृतास्तथा (for क्रियास्तथा).

28 B1 om. up to न (cf. v. l. 27). — a) V1 B2 D5 भय- (for भयं). K5 Da Dn1. n3 D2. 8 -चापल्ये (for °ल्यं). — b) V1 B (B1 om.) Da D5 शोकस्तेषु न (by transp.). — c) D5 अधर्म- (for न धर्म-). B1 -ध्वनिकाश्; T1 G5 -वर्जिनश् (for -ध्वजिनश्). — d) D4 गर्ह्यं (for गुह्यं). K5 Dn1. n3 D2. 3. 8 कंचिद् (for किंचिद्). D7 S (G3. 4 absent) आश्रिताः (for °स्थिताः).

29 B4 damaged. — a) Bo. 3. 5 [अ]मोहस्; B2 D5 लोभस् (for [अ]लोभस्). Bo. 3. 5 [अ]लोभो (for [अ]मोहो). — b) K3. 5 Dn1. n3 D2. 3. 5. 8 स्थिताः (for रताः). — c) Ś1 K3. 4 D1. 9 कौरव्य (for कौन्तेय). D7 G2 रम्येथा; D9 रज्यस्व (for रज्येथा). — d) K2. 4 येषां तंद्रीकृतं मनः; K3 D4. 9 तेष्वतंद्रीरतं मनः; K5 Dn1. n3 D2. 8 येषां न भ्रश्यते पुनः; V1 Bo-3. 5 Da येषु (B3. 5 °ष्व-) तंत्रीरतं मनः; D7 T1 G2. 5 येष्वतंत्री- (G2 °द्री)रनुत्तमा; T2 G1 M येषु तत्र (M तंत्र-) रतं मतं.

30 a) K4 लोकेषु; D5 लोभेषु (for लाभेषु). — b) Da1 न लोभेषु; T2 M4 न लाभेषु (for नाला°). G2 नालाभे व्यथयंति च. — c) K1 निर्दमा; Da1 निर्ममो (for °र्ममा). M2 निर्मुक्तास्ते न संदेहः. — d) D1 सांत्वस्थाः; D5 संतुष्टाः (for सत्त्वस्थाः). Ś1 K2 D1 समदर्शनाः (K2 °नः); V1 B1. 2 Da प्रियदर्शनाः; T2 सर्वदर्शिनः (for सम°).

31 B2. 4 partly damaged. — a) D7 T1 G2. 5 लाभालाभे. K3 M2 सुखं दुःखे; D1 सुखदुःखं (for सुखदुःखे). D1 एता न (sic); D5 तथा वै; M2 तथा तात (for च तात). — b) Bo transp. मरणं and जीवितं. — c) M4 एषां (for येषां). B1 Da हि स्थिरक्रमाणां; G1 स्थिरविक्रियाणां (for °विक्रमाणां). — d) K5 Dn1. n3 D2. 4. 8 बुभुत्सतां; V1 Bo. 3 Da T2 G2 बुद्ध्यात्मनां (G2 °ना); B5 M4 बुद्धात्मनां; D9 शुद्धात्मनां; G1 वद्धात्मनां (for बुद्धात्मनां). K5 Dn1. n3 D2-4. 8 सत्त्वपथे (D4 °थि) स्थितानां; V1 Bo. 1. 3. 5 Da सत्पथमा°; D5. 7 S (G3. 4 absent) सत्यपथि स्थि° (D5 °थे स्थि°; D7 G2. 5 °दि स्थि°) (for सत्त्वमवस्थि°).

32 a) G1 सुखं (for सुख-). V1 Bo. 2. 4. 5 Da T2 G1 -प्रियांस्तान्; B1. 3 -प्रिय(B3 °या)स्तान्; D9 -प्रियस्थान् (for -प्रियैस्तान्). K3. 5 Dn1. n3 D2-5. 8 धर्मप्रियांस्तान्. K3 Bo. 2-5 T2 सुमहा(K3 °हान्)प्रभावान्; K5 V1 B1 Da Dn1. n3 D2-5. 8 सुमहानुभावान्; D9 सुमहत्प्रभावात्; M2 सुमनाः प्रतापवान् (for सुमहाप्रतापान्). D7 T1 G2. 5 सुखप्रियांश्चापि महाप्रतापान्. — b) Ś1 K2 D1 यांस्त्वं; K1 यत्ने; K4 यस्त्वं; K5 V1 Bo-3. 5 Da Dn1. n3 D2-5 दांतो; D8 क्षांतो; D9 यज्ञे; T1 G2. 5 युक्तो (for यत्तो). Ś1 K2. 4 प्रमत्तांश् (for ऽप्रमत्तश्). K2. 5 Da Dn1. n3 D2-5. 8 T2 M2 समर्चयेथाः (for समर्थ°). — c) K3-5 Da2 Dn3 D2. 3 दैवान्सर्वे; D4 दैवान्सर्वौ. — d) K5 B4 Da2 Dn1. n3 D2. 3. 8. 9 शुभाशुभे (D9 °भौ) (for शुभाशुभा). D9 वाक्प्रलापौ (for °लापा). K3. 5 Dn1. n3 D2-4. 8 तथान्ये; Bo. 5 D5 तथैव (for य°).

Colophon. — *Sub-parvan:* Ś1 K V1 B1. 2 Da1 Dn3 D1-5. 9 आपद्धर्म; Da2 D7 S (G3. 4 absent) राजधर्म. — *Adhy. name:* Ś1 सुलोभाध्यायः; K1-3

# १५३

C. 12 5912
B. 12.159.1
K. 12.157.1

युधिष्ठिर उवाच ।
अनर्थानामधिष्ठानमुक्तो लोभः पितामह ।
अज्ञानमपि वै तात श्रोतुमिच्छामि तत्त्वतः ॥ १
भीष्म उवाच ।
करोति पापं योऽज्ञानान्नात्मनो वेत्ति च क्षमम् ।
प्रद्वेष्टि साधुवृत्तांश्च स लोकस्यैति वाच्यताम् ॥ २
अज्ञानान्निरयं याति तथाज्ञानेन दुर्गतिम् ।
अज्ञानात्क्लेशमाप्नोति तथापत्सु निमज्जति ॥ ३

युधिष्ठिर उवाच ।
अज्ञानस्य प्रवृत्तिं च स्थानं वृद्धिं क्षयोदयौ ।
मूलं योगं गतिं कालं कारणं हेतुमेव च ॥ ४
श्रोतुमिच्छामि तत्त्वेन यथावदिह पार्थिव ।
अज्ञानप्रभवं हीदं यद्दुःखमुपलभ्यते ॥ ५
भीष्म उवाच ।
रागो द्वेषस्तथा मोहो हर्षः शोकोऽभिमानिता ।
कामः क्रोधश्च दर्पश्च तन्द्रीरालस्यमेव च ॥ ६

---

Bo. 2–5 Da D4 लोभाध्यायः; D5 लोभोपाख्यानं; M2 लोभनिंदा. — *Adhy. no.* (figures, words or both): B1 147; B2 T1 G5 157; B3.4 G1.2 156; Da1 26; Dn1 28; D8 22; T2 150; M1.2.4 158; M3 168. — *Śloka no.:* Da Dn1 D8 35; Dn3 34; D9 75.

## 153

1 B1 om. 1 with the preceding ref. — [a]) V1 B (B1 om.) Da अनिष्टानाम् (for अनर्थानाम्). K2 M3 अधिष्ठानाम् (for °नम्). D5 अधिष्ठानमधिष्ठानम्. — [b]) M1.3 उक्त- (for उक्तो). — [c]) V1 Da राजेंद्र; D7 S (G3.4 absent) कौरव्य (for वै तात).

2 G2 om. the ref. B1 युधिष्ठिर (for भीष्म). — [a]) D7 अज्ञानं; T1 G2.5 अज्ञानान् (for योऽज्ञानान्). — [b]) V1 B1.2 Da D4 T2 G1 M विंदते; B3.5 वैति च (for वेत्ति च). K2–5 V1 Bo–4 Dn3 D2.3.5.8 क्षयं; D1.4 G1 क्षमां (for क्षमम्). — [c]) V1 B1.2 Da D7 S (G3.4 absent) द्विषते (for प्रद्वेष्टि). K3 D4 -वृत्तानां; K4 Bo.3–5 -युक्तानां; D1 -भूतांश्च (for -वृत्तांश्च). — [d]) K1.3 V1 Bo.1.5 D1.3–5.9 G1.2 M1–3 लोकस्येति; Da1 °श्चेति (for °स्यैति). B1.2.5 Da T2 G1 M वध्यतां (for वाच्यताम्).

3 [a]) M2 अज्ञानं (for °नान्). K3 D9 नरकं (for निरयं). Ś1 K2.4 D1 M1.3 यांति (for याति). — [b]) D1 यथा (for तथा). Da1 दुर्मतिं (for °गतिम्). D5 दुर्गतिं तात गच्छति. — [c]) B1.2.5 (marg.; orig. as in text) द्वेषम् (for क्लेशम्). — [d]) K4 Bo.3 तथाज्ञानं (for °पत्सु). B2 Da तथैवापत्सु मज्जति.

4 T1 G2.5 om. the ref. — [a]) B5 अज्ञानं च; Da1 अज्ञानश्च; T2 प्रज्ञानस्य (for अज्ञा°). G1 प्रवृद्धिं; M1.3.4 प्रवृत्तिश् (for °त्तिं). D7 T1 G2.5 प्रजानाम् प्रवृत्तिं च; M1.3 (also) प्रजनं च प्रतिष्ठानां; M2 प्रजनं च प्रतिष्ठां च. — [b]) K5 B3.4 Dn1.n3 D1–3.5.8 स्थानं वृद्धि-; Bo.2 स्थानं वृद्धं; D7 S (G3.4 absent) स्था- (D7 T1 G1.5 ज्ञा-; G2 दा)नवृद्धि- (M3 °त्ति-) (for स्थानं वृद्धिं). D7 T2 G1.2 M3.4 -क्षयोदयान्; T1 G5 °दयात् (for क्षयोदयौ). — [c]) K1 D9 मूलयोगं; K3 Da D7 M1.2 मूलं स्थानं; V1 मूलं योग-; D4 M3.4 मूलस्थानं; T1 G2.5 मूलं स्थान-; T2 G1 रूढस्थानं (for मूलं योगं). K3 मतिं (for गतिं). — [d]) D9 कारणं चेह तस्य यत्.

5 [a]) T2 G1 चार्थेन (for तत्त्वेन). — [b]) M1.3 इव (for इह). T2 G1 भारत (for पार्थिव). — Before 5[c], D7 T1 G2.5 ins. भीष्म उवाच. — [c]) Bo.5 G1 अज्ञानं; B3 अज्ञानः (for °न-). K5 V1 Dn1.n3 D2.3.7.8 T1 G5 -प्रसवं; Bo.3.5 (marg. as in text) कारणं (for -प्रभवं). K3 हीनं (for हीदं). D5 ज्ञानं प्रभवते हीदं. — [d]) Da D1 अनु(D1 °प)लभ्यते (for उप°).

6 D7 T1 G2.5 om. the ref. — [b]) M3 हर्षै. K1 [s]भिमानिताः; K3 [s]तिमानिताः; B2 [s]वमानिता; D7.9 S (G3.4 absent) [s]तिमानि(G1 °न)ता (for sभि°). — [c]) Da1 D9 G1 काम-; M2 शोकः (for कामः). Ś1 K2.4 D1 लोभश् (for दर्पश्). — [d]) K3.5 V1 B Da Dn1.n3 D2–5.7–9 T G1.2.5 तंद्री (V1 Dn3 D2.3.8 °द्रा) (for तन्द्रीर्). K3.5 V1 B3.4 Dn1.n3 D2–4.7–9 T2 G1 चालस्यम्; Bo–2.5 Da D5 T1 G2.5 ह्यालस्यम् (B1 ह्यलसम्) (for आलस्यम्).

इच्छा द्वेषस्तथा तापः परवृद्ध्युपतापिता ।
अज्ञानमेतन्निर्दिष्टं पापानां चैव याः क्रियाः ॥ ७
एतया या प्रवृत्तिश्च वृद्ध्यादीन्यांश्च पृच्छसि ।
विस्तरेण महाबाहो शृणु तच्च विशां पते ॥ ८
उभावेतौ समफलौ समदोषौ च भारत ।
अज्ञानं चातिलोभश्चाप्येकं जानीहि पार्थिव ॥ ९
लोभप्रभवमज्ञानं वृद्धं भूयः प्रवर्धते ।
स्थाने स्थानं क्षये क्षैण्यमुपैति विविधां गतिम् ॥ १०
मूलं लोभस्य महतः कालात्मगतिरेव च ।
छिन्नेऽच्छिन्ने तथा लोभे कारणं काल एव हि ॥ ११
तस्याज्ञानात्तु लोभो हि लोभादज्ञानमेव च ।
सर्वे दोषास्तथा लोभात्तस्माल्लोभं विवर्जयेत् ॥ १२

C. 12. 5923
B. 12. 159. 12
K. 12. 157. 12

7 G1 reads 7[a] twice. —[a]) Da2 तात (for तापः). —[b]) K1 D1 परवृद्ध्यपतापिता; K4 परविद्धयुप°; B D5 मानो धन्याभि( B1 धृत्यभि-; B2 धृत्यति )मानिता ( D5 °लापिता ); D7 परवृद्ध्यापि तापिता; M1-3 °वृत्त्युप°; M4 परप्रत्युपकारिता. —[c]) D7 एवं (for एतन्). —[d]) V1 B1.2 D7.9 T1 G2.5 M2 या ( D9 याः ) क्रिया (for याः क्रियाः).

8 [a]) K3 V1 B1.2 Da2 Dn1.n3 D2.3.7-9 S ( G3.4 absent ) एतस्य यः ( K3 V1 Da2 D9 M या; B1 यां; Dn1.n3 D2.8 वा; D3.7 च ); K5 एतेषां च; Da1 एतश्च या; D4 एतद्वृत्या ( for एतया या ). K4 Dn1.n3 D2.8 प्रवृत्तेश्च; K5 D3 [अ]प्रवृत्तेश्च; B1.2 D7 T G1.2.5 प्रवृत्तिं ( for प्रवृत्तिश्च ). Bo.3-5 D5 एतस्य पापवृत्तेश्च ( B5 marg. यां प्रवृत्तिं च ). —[b]) K2 M वृद्ध्या( M4 °द्धा )दीनां च; K3 वृद्धादीन्यांश्च; Bo-2.4 D1.3.5.8 बुद्ध्यादीन्यांश्च ( D1 °नां च ); D7 वृत्त्यादीनां च; T2 वृद्ध्यादीन्यश्च; G1 प्रत्यादीनां च; G2 वृद्ध्यादींश्चापि ( for वृद्ध्यादीन्यांश्च ). D7 T G1.2.5 पश्यति; M निश्चयः ( for पृच्छसि ). —[c]) All MSS. ( except Ś1 K2.4 D1; Dn2 D6 G3.4 absent ) महाराज ( for °बाहो ). —[d]) Dn1 तत्र; D4.9 M1 तत्त्वं; T2 तस्य; M2 सर्वम् ( for तच्च ). K5 Dn1.n3 D2.3.8 विशेषतः; D4 M2 अशे° ( for विशां पते ).

9 [a]) Ś1 K ( except K5 ) D1 सुखफलौ; V1 B ( B4 damaged ) D5 तुल्यबलौ; Da दुःखफलौ; Dn3 समकलौ; T2 G1 M2 समबलौ ( for °फलौ ). —[b]) B1 समदेशौ ( for °दोषौ ). —[c]) V1 Bo-2.5 T1 G5 चापि; D4 अपि; D7 T2 G1 M चैव; G2 चाभि- ( for चाति- ). B1 लोभाश्च; D5 -लोभं ( for -लोभश्च ). —[d]) Dn1 D4 एतज्ज् ( for एकं ). V1 B1.2 Da एतज्जानीहि भारत; D7 T G1.2.5 M4 एवं जानीष्व भारत; M1-3 एतौ ज्ञात्वा विवर्जय ( M2 °येत् ).

10 [a]) Bo.5 ( marg. as in text ) अज्ञानप्रभवं वृद्धं; B3 अज्ञानं प्रभवं लोभं. —[b]) K3 D4 G1.2 M1.3.4 वृद्धे; V1 वृत्तं; B1 बुद्धिं; B5 ( marg. as in text ) लोभं; D7 T1 G5 वृद्धेर्; T2 वृद्धिर्; M2 वृद्धौ ( for वृद्धं ). V1 B1.2.4 Da D1.4 ( also as in text ) T2 G2 प्रवर्तते ( for °र्धते ). —[c]) K1 क्षणे स्थूलं; K2.4.5 V1 D1-3.8 स्थाने स्थाने; Bo.3-5 स्थानं स्थाने ( for स्थाने स्थानं ). K1.3.4 V1 B1.4 Da D4.7.9 S ( G3.4 absent ) क्षये ( K1 °णे; B4 T1 °यं ) क्षीणम्; K5 Dn1.n3 D2.3.8 भवेत्क्षीणम्; Bo.2.3.5 क्षयं क्षीणे ( for क्षये क्षैण्यम् ). —[d]) Dn3 उपैषि ( for °ति ). B1 Da परमां ( for विविधां ). — After 10, the sequence in T2 is: 11[a], 11[d]-12[a], 11[b], 12[cd], 13, 11[c], 11[d]-12[a] (r), 12[b].

11 [a]) T1 G2.5 लोभोस्य. K3.5 Da1 Dn1.n3 D2-4.8 मोहो वै; Da2 यो नो वै; T1 G2.5 हेतुश्च ( for महतः ). — D7 T1 G5 om. 11[b]. —[b]) K3 V1 B Da2 D4.5 कालात्मा; T2 G1 M कामात्मा ( for कालात्म- ). G2 कारणं लोभ एव च. — D7 T1 G5 read 11[c] and repeat ( with var. ) 11[d] after 13. G1 M read 11[c]-12[b] after 13; while G2 reads 11[cd] after 13. —[c]) K4 V1 B ( except B1 ) Da2 Dn1.n3 D2.3.5.8 छिन्ने भिन्ने; Da1 छिन्नभिन्ने; D4 विच्छिन्ने च; M2 छिन्ने छिन्नं; M4 भिन्नभिन्ने ( for छिन्नेऽच्छिन्ने ). D5 लोके ( for लोभे ). —[d]) V1 Da D5.7 T1 ( last two first time ).2 G1.5 ( first time ) M लोभ ( for काल ). K5 V1 Bo.1.3.4 Da Dn1.n3 D2-4.7 ( first time ).8 T ( both first time ) G1.5 ( first time ) M च; B5 ह ( for हि ). D7 T1 ( both second time ) G2.5 ( second time ) दिवं प्राप्ता जनाधिप ( D7 [ second time ] °प्ताः ); T2 ( second time ) कारणं लोभ एव च.

12 For the sequence in T2, cf. v. l. 10; and for that in G1 M, cf. v. l. 11. B4 partly damaged. —[a]) M4 तथा ( for तस्य ). K5 Da1 Dn1.n3 D3.8 [अ]ज्ञानाद्धि; Bo.2.3.5 D5 [अ]ज्ञानाच्च; Da2 D2 ज्ञानाद्धि; T2 ( both times ) G1 M [अ]ज्ञानस्य ( for [अ]ज्ञानात्तु ). Bo.2-5 लोभश्च; D5 लोको हि ( for लोभो हि ). B1 D9 तस्माज्ज्ञानात्तु लोभो हि; D7 T1 G2.5 कामात्मा गतिरेव च ( cf. 11[b] ). —[c]) K1.3.5 V1

C. 12. 5924
B. 12. 159. 13
K. 12. 157. 13

जनको युवनाश्वश्च वृषादर्भिः प्रसेनजित् ।
लोभक्षयाद्दिवं प्राप्तास्तथैवान्ये जनाधिपाः ॥ १३

प्रत्यक्षं तु कुरुश्रेष्ठ त्यज लोभमिहात्मना ।
त्यक्त्वा लोभं सुखं लोके प्रेत्य चानुचरिष्यसि ॥ १४

इति श्रीमहाभारते शान्तिपर्वणि त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

## १५४

युधिष्ठिर उवाच ।
स्वाध्यायकृतयत्नस्य ब्राह्मणस्य पितामह ।
धर्मकामस्य धर्मात्मन्किं नु श्रेय इहोच्यते ॥ १
बहुधादर्शने लोके श्रेयो यदिह मन्यसे ।
अस्मिँल्लोके परे चैव तन्मे ब्रूहि पितामह ॥ २
महानयं धर्मपथो बहुशाखश्च भारत ।
किं स्विदेवेह धर्माणामनुष्ठेयतमं मतम् ॥ ३
धर्मस्य महतो राजन्बहुशाखस्य तत्त्वतः ।

B1 Da Dn1. n3 D2. 3. 8. 9 G1 M1–3 सर्व· (for सर्वे). Bo G1. 2 M2 लोभास् (for °भात्). — d) D1 लोभो (for लोभं). D7 परित्यजेत् (for विवर्जयेत्).

13 For the sequence in T2, cf. v. l. 10; and for that in G1 M, cf. v. l. 11. — b) B1. 2 वृषादा· (B2 °द)र्भः; D5. 7 T1 G2. 5 पृषदश्वः; T2 G1 वृषादर्वि· (G1 °र्वी); M2 वृषादंभः (for °दर्भिः). — c) B2 Da1 त्यक्त्वा लोभं (for लोभक्षयाद्). Da यातस् (for प्राप्तास्). — d) G1 तथान्ये च (for तथैवान्ये). K2. 3 D9 नराधिपाः (for जना°). V1 B1. 2 Da ये चान्ये पृथिवीक्षितः; T2 तथान्ये जनकाधिपाः. — After 13, D7 T1 G5 read 11c and repeat (with var.) 11d; while G2 reads 11cd after 13.

14 a) D7 T1 G5 प्रत्यक्षस् (for °क्षं). D7 S (G3. 4 absent) नरश्रेष्ठ (for कुरु°). — b) V1 B Da D4. 5 T2 G1. 2 M इहात्मनः; D7 T1 G5 इवात्मनः; D9 महात्मना (for इहात्मना). — c) K3 V1 B1 Da D4. 7. 9 S (G3. 4 absent) सुखी; D5 कथं (for सुखं). — d) K4 प्रति (for प्रेत्य). K5 D3 वानु·; V1 B1. 2 Da D4. 9 चेह (for चानु·). D7 S (G3. 4 absent) प्रेत्य चेह च मोदते (T2 °से).

Colophon. — *Sub-parvan:* Ś1 K V1 B1 Da Dn1 D1–5. 9 आपद्धर्म; B2. 3. 5 D7 S (G3. 4 absent) राजधर्म. — *Adhy. name:* Ś1 K1–4 Bo. 2–5 Da Dn1 अज्ञानाध्यायः; K5 Dn3 D2. 3 आत्मज्ञानाध्यायः; V1 B1 लोभाध्यायः; D1. 4 ज्ञानाध्यायः; M2 अज्ञानवर्णनं. — *Adhy. no.* (figures, words or both): B1 148; B3 T2 G1. 2 157; B4 156; Da1 27; Dn1 29 D8 23; T1 G5 158; M 159. — *Śloka no.:* Da1 Dn1. n3 D8 14.

## 154

1 a) K5 V1 B1. 2 Dn1. n3 D2–4. 8 स्वाध्याये (for °य·). T1 G2. 5 ·यज्ञस्य (for ·यत्नस्य). — b) K5 Dn1. n3 D2. 3. 8 नरस्य च; Da1 ब्राह्मणश्च (for ब्राह्मणस्य). K3 पितामहः; D7 S (G3. 4 absent) विशेषतः (for पितामह). — c) T2 G1 धर्मारामस्य (for धर्मकामस्य). — d) K5 G1 तु; M2 न (for नु).

2 a) D7 बहु वा (for बहुधा·). — b) V1 अभि· (for इह). — d) D4 तातो (sic) (for तन्मे).

3 a) D1 महाभयं (for महानयं). M4 धर्मपथे (for धर्मपथो). — b) Da2 ·शाखाश्च (for ·शाखश्च). Dn1 om. (hapl.) from भारत up to शाखस्य (in 4b). — c) Ś1 K2–4 V1 B1. 2 Da Dn1 D4. 9 किं स्विदेव हि; D2. 3. 8 किंचिदेवेह; T2 किं नु स्विदिह (for किं स्विदेवेह). — d) K1–3 D4. 9 अनुष्ठेयं; Da1 अनुश्रेय· (for अनुष्ठेय·). K4 ·तमे (for ·तमं). Da परं (for मतम्).

4 Dn1 om. up to शाखस्य (cf. v. l. 3). — a) Da1 धर्मश्च (for °स्य). — b) Bo ·शाखश्च (for °स्य). D4 भारत (for तत्त्वतः). —D5 om. 4cd; V1 reads the same on marg. — d) T2 G1 सर्वं तत् (by transp.). K3. 5 V1 Dn1 D2. 3. 8 तस्वतः; Bo. 3–5 भारत; B1. 2

यन्मूलं परमं तात तत्सर्वं ब्रूह्यतन्द्रितः ॥ ४

भीष्म उवाच ।

हन्त ते कथयिष्यामि येन श्रेयः प्रपत्स्यसे ।
पीत्वामृतमिव प्राज्ञो ज्ञानतृप्तो भविष्यसि ॥ ५
धर्मस्य विधयो नैके ते ते प्रोक्ता महर्षिभिः ।
स्वं स्वं विज्ञानमाश्रित्य दमस्तेषां परायणम् ॥ ६
दमं निःश्रेयसं प्राहुर्वृद्धा निश्चयदर्शिनः ।
ब्राह्मणस्य विशेषेण दमो धर्मः सनातनः ॥ ७
नादान्तस्य क्रियासिद्धिर्यथावदुपलभ्यते ।
दमो दानं तथा यज्ञानधीतं चातिवर्तते ॥ ८
दमस्तेजो वर्धयति पवित्रं च दमः परम् ।
विपाप्मा तेजसा युक्तः पुरुषो विन्दते महत् ॥ ९
दमेन सदृशं धर्मं नान्यं लोकेषु शुश्रुम ।
दमो हि परमो लोके प्रशस्तः सर्वधर्मिणाम् ॥ १०
प्रेत्य चापि मनुष्येन्द्र परमं विन्दते सुखम् ।
दमेन हि समायुक्तो महान्तं धर्ममश्नुते ॥ ११
सुखं दान्तः प्रस्वपिति सुखं च प्रतिबुध्यते ।
सुखं पर्येति लोकांश्च मनश्चास्य प्रसीदति ॥ १२

C. 12. 5937
B. 12. 160.
K. 12. 158.

---

Da Dn3 M1. 3. 4 [अ]शेषतः; D1 तंद्रितः (for [अ]तन्द्रितः).

5 M2 om. $5^{a}$–$6^{b}$. — a) V1 B2 Da हंत तेहं प्रवक्ष्यामि; B1 D7 S (M2 om.; G3. 4 absent) तत्तेहं (B1 हंत ते) संप्रवक्ष्यामि. — b) K1 प्रपश्यसे; K5 Bo. 3–5 Dn1. n3 D2. 3. 5. 8 ह्यवाप्स्यसि; V1 D4 M4 प्रपत्स्यसि (M4 °ते); B1 प्रपश्यसि (for °त्स्यसे). — c) D1 मत्वा (for पीत्वा). Ś1 K1. 4 D1. 9 प्राज्ञ (for °ज्ञो). — d) D7 T1 G2. 5 येन तृप्तो; T2 G1 न तृप्तो हि (for ज्ञानतृप्तो). B5 चरिष्यसि (for भवि°).

6 M2 om. $6^{ab}$ (cf. v. l. 5). — ab) K3 विषयो; D5 विषये (for विधयो). K1 V1 B1 Da D5 लोके; K2. 4 B5 G1 [ऽ]नेके; D1 नेको (for नैके). D4 धर्मस्य विषयानेके. D7 T1 G2. 5 नैकांते (for नैके ते). K5 V1 B1–4 Da Dn1. n3 D2–5. 8 ये वै (for ते ते). M3 प्रोक्तं (for प्रोक्ता). B4 महात्मभिः; Da मनी(Da1 °नि)षिभिः (for महर्षिभिः). — c) D5 सुखं (for स्वं स्वं). T2 G1 आवृत्य (for आश्रित्य).

7 With 7, cf. B. 12. 220. 2. — a) T1 दमान् (for दमं). D1 निःश्रेयसे; T2 G1. 2 M2–4 निश्रेयसं (for निःश्रेयसं). B2 Da दमो (B2 °मं) निश्रेयमित्याहुर्. — b) Bo. 1. 3 बुधा; T2 वृथा (for वृद्धा). B (except B4) Da D5 निश्चित- (for निश्चय-). Da -दर्शनः (Da2 °नाः). D7 T1 G2. 5 M वृद्धानामिति दर्शनं (T1 G5 °र्शिनः).

8 $8^{ab}$ = (var.) B. 12. 220. $3^{ab}$. — a) K5 Dn1. n3 D2. 3. 8 दमात्तस्य; V1 B D5 दमादेव; Da दमो देव (for नादान्तस्य). — b) D7 S (G3. 4 absent) कथंचिद् (for यथावद्). Bo. 3. 5 -दिश्यते (for -लभ्यते). — c) V1 M2 तपो (for तथा). K1 यज्ञो; B1 T2 G1 ज्ञानम्; B2 Da Dn1 D5 यज्ञम् (for यज्ञान्). — d) Ś1 K1. 2 D1. 3 आधीतं; K4 आधीते; M अतिर्थीश्च (for अधीतं). M1. 3 चापि (for चाति-).

9 = (var.) B. 12. 220. 4. — b) M1 पवित्रश्च (for °त्रं). B1 T1 G5 दमं (for दमः). — c) D1 विपाप्म- (for °प्मा). D1 तेजसो; T2 G1 तपसा (for तेजसा). —After $9^{abc}$, the sequence in Da is: $11^{d}$, 12, 13, 10, $11^{abc}$, $11^{d}$ (r), 14. B1 Da om. $9^{d}$. — d) G2 फलं (for महत्). — After 9, V1 reads 12–13.

10 For the sequence in Da, cf. v. l. 9. B1 reads, while B2 repeats, 10–11 after 13. — a) V1 B1 Da सदृशो (for °शं). V1 B1 Da धर्मो; M4 नान्यं (for धर्मं). — b) V1 Da नान्यो; M4 धर्मं (for नान्यं). K1 लोके तु (for लोकेषु). K1. 3 D4. 7. 9 S (except M4; G3. 4 absent) शुश्रुमः; V1 B1 Da दृश्यते (for शुश्रुम). — c) K1 D1 परमं (for °मो). D7 T1 G2. 5 धर्मः (for लोके). — d) K3 B2. 3 D8 -कर्मिणां; V1 B1. 5 Da D2. 7 S (G3. 4 absent) -कर्मणां; Bo -धर्मणां; D1 -कर्मणात् (for -धर्मिणाम्).

11 For the sequence in B1. 2 Da, cf. v. l. 10, 9. — a) K4 चाति-; K5 Dn1. n3 D2. 3. 8 चात्र; T2 G1 चेह (for चापि). — b) D5 विद्यते परमं सुखं. — c) D1 धर्मेण (for दमेन). T2 G1 [इ]ह (for हि). D4. 5 समायुक्तं (D4 °क्तौ); D7 T1 G5 M4 सदा युक्तो; M2 समो युक्तो (for समायुक्तो).

12 = (var.) B. 12. 220. 5. For the sequence in V1 Da, cf. v. l. 9. — a) K5 दमः; D7 T1 G2. 5 ततः; G1 दांता (for दान्तः). Da स्वपिति हि

C. 12. 5938
B. 12. 160. 13
K. 12. 158. 13

अदान्तः पुरुषः क्लेशमभीक्ष्णं प्रतिपद्यते ।
अनर्थांश्च बहूनन्यान्प्रसृजत्यात्मदोषजान् ॥ १३
आश्रमेषु चतुर्ष्वाहुर्दममेवोत्तमं व्रतम् ।
तस्य लिङ्गानि वक्ष्यामि येषां समुदयो दमः ॥ १४
क्षमा धृतिरहिंसा च समता सत्यमार्जवम् ।
इन्द्रियावजयो दाक्ष्यं मार्दवं ह्रीरचापलम् ॥ १५
अकार्पण्यमसंरम्भः संतोषः प्रियवादिता ।
अविवित्सानसूया चाप्येषां समुदयो दमः ॥ १६
गुरुपूजा च कौरव्य दया भूतेष्वपैशुनम् ।
जनवादोऽमृषावादः स्तुतिनिन्दाविवर्जनम् ॥ १७
कामः क्रोधश्च लोभश्च दर्पः स्तम्भो विकत्थनम् ।
मोह ईर्ष्यावमानश्चेत्येतद्दान्तो न सेवते ॥ १८
अनिन्दितो ह्यकामात्माथाल्पेच्छोऽथानसूयकः ।
समुद्रकल्पः स नरो न कदाचन पूर्यते ॥ १९

---

( for प्रस्वपिति ). Bo. 3–5 D5 सुखं च दांतः स्वपिति. — b) B1. 2 Da सुखी ( for सुखं ). Da1 D5 प्रतिबुध्यसे ( D5 °ति ) ( for °बुध्यते ). T2 सुखेनेह प्रबुध्यते. — c) D7 T1 G2. 5 पश्यति ( for पर्येति ). Bo. 3. 5 लोकेषु; T2 G1 कालांश्च ( for लोकांश्च ). — d) D9 मनसापि ( for मनश्चास्य ).

13 For the sequence in V1 Da, cf. v. l. 9. — a) B1 द्वेषम्; G1 क्लेदम् ( for क्लेशम् ). — b) D7 T1 G2. 5 सं( T1 G5 स )प्रपद्यते ( for प्रति° ). — c) D5 अल्पान् ( for अन्यान् ). — d) D4 विसृजति; T2 प्रसज्यंति; G1 प्रसज्यति ( for प्रसृजति ). D1 G1 -दोषवान् ( for °जान् ). D5 अयमृज्वात्मदोषवत्. — After 13, B1 reads, while B2 repeats, 10–11.

14 For the sequence in Da, cf. v. l. 9. — a) D1. 8 चतुर्बाहुर् ( for °ष्वाहुर् ). — b) T2 G1 दम; G2 धर्मम् ( for दमम् ). D4 एवोत्तरं ( for °मं ). D7 T1 G2. 5 दमं; T2 G1 M बलं ( for व्रतम् ). — $14^{cd}$ = B. 12. 220. $9^{ab}$. — c) D7 S ( except M2; G3. 4 absent ) दम- ( for तस्य ). — d) T2 G1 एषां ( for येषां ). Ś1 K2 मतः; K4 मदः; D1 मताः ( for दमः ).

15 K5 D7 G1 om. ( hapl. ) 15–16. — c) K1. 3 V1 B Da Dn1. n3 D2–5. 8. 9 T G5 इंद्रियाभिजयो दाक्ष्यं; G2 M इंद्रियाणां जयो दाक्ष्यं. — d) B1 M2. 3 आर्जवं ( for मार्दवं ). D1 श्रीर् ( for ह्रीर् ).

16 K5 D7 G1 om. 16 ( cf. v. l. 15 ). $16^{ab}$ = ( var. ) B. 12. 220. $9^{cd}$. — a) Da1 D4 अकर्म( Da1 °र्पं )ण्यम् ( for अकार्पं° ). — b) K1 संतोष- ( for °षः ). — B3 om. $16^{cd}$. — c) K4 V1 Bo–2. 4 Dn1. n3 D2–5. 8 M1. 2 अविहिंसा; Da1 अविधित्सा; T2 G2 अहिंसा च; M3 अपि हिंसा ( for अविवित्सा ). T1 G5 अहिंसा अनसूया च. — d) V1 Bo–2. 5 D4. 5 एषां; Da T G2. 5 M2–4 येषां ( for [अ]प्येषां ). Da2 दमं; M2 गुणः ( for दमः ).

17 a) D4 कर्तव्या ( for कौरव्य ). — b) D7 S ( G3. 4 absent ) सदा ( for दया ). K3. 5 B1. 3. 4 Dn1. n3 D1–4. 8 पैशुनं ( for [अ]पै° ). — $17^{cd}$ = ( var. ) 12. 220. $11^{ab}$. V1 reads $17^{c}$–$18^{d}$ on marg. — c) B4 T1 G5 जनवादं ( for °दो ). K5 Dn1. n3 D2. 3. 7. 8 जनवादं मृषावादं; D4 T2 G1. 2 जनवादमृषा( T2 G1 °स्तुती )वाद- ( D4 °दं ). — d) T2 G1 मृषा- ( for स्तुति- ). Bo. 5 Dn1. n3 -विसर्जनं ( for -विवर्जनम् ).

18 V1 reads 18 on marg. — a) Bo. 4 कामं ( for कामः ). Bo. 3–5 D5 दर्पश्च ( for लोभश्च ). K5 B1. 2 Da Dn1. n3 D2–4. 7. 8 S ( G3. 4 absent ) कामं क्रोधं च लोभं ( B1. 2 Da हर्षं ) च ( D4 वा ). — b) K1. 3 ( marg.; orig. as in text ) D4 धर्मः; Bo. 3–5 लोभः; D5 मोहः ( for दर्पः ). K5 Dn1. n3 D2. 3. 8 दर्पं स्तंभं; B1. 2 Da दंभं दर्पं; T1 G2. 5 M दर्पं दंभं ( M डंभं ); T2 G1 दर्पं दर्प- ( for दर्पः स्तम्भो ). D5 विकत्थनः. — c) K3. 5 Dn1. n3 D2–4. 8 रोषम्; Bo. 3–5 D5 क्रोध ( for मोह ). Ś1 K3 D1. 9 च मानश्च; K5 Dn3 D2–4. 8 [अ]वमानं; V1 Bo. 3–5 D5 [अ]भिमानश्च; Dn1 [अ]पमानं ( for [अ]वमानश्च ). B1. 2 Da मानमीर्ष्यां ( Da °र्ष्या ) च मोहं च; D7 S ( G3. 4 absent ) मानमीर्ष्या( G1 °क्ष्या )मसूयां च. — d) B1. 2 Da दांतो ह्येतान् ( for एतद्दान्तो ). K5 V1 Bo. 3–5 Dn1. n3 D2. 3. 5. 7. 8 S ( G3. 4 absent ) नैतान् ( K5 Dn1. n3 D2. 3. 8 नैव ) दांतो ( M3 °ता ) निषेवते; D4 नैवादांतो विवर्जयेत्.

19 V1 om. $19^{a}$–$20^{b}$; G1 om. ( hapl. ) 19–20. — a) Bo. 3. 5 ह्रीनिषेवो; B1 Da ह्य( Da2 स्व )कामार्थो ( for °मात्मा ). — b) K3 D4 नाल्पेष्वेव; K4 बुद्धिसंस्तो ( sic ); Bo. 3. 5 ह्यात्मसंस्थो; B4 आत्मस्थोथ; D5 आत्मनोर्था; D9 तथाल्पेच्छो ( for [अ]थाल्पेच्छो ). K1 [ऽ]पि ( for ऽथ ). B1 अन्योच्छाखाप्यलोलुपाः ( sic ); B3 स्वथ तस्मादलोलुपः; B2 ( marg. ) Da M3. 4 अ- ( M3. 4 स्व )ल्पेच्छाथाप्य( B2 m °च्छोथाल्प-; M4 °च्छो-

अहं त्वयि मम त्वं च मयि ते तेषु चाप्यहम् ।
पूर्वसंबन्धिसंयोगान्नैतद्दान्तो निषेवते ॥ २०
सर्वा ग्राम्यास्तथारण्या याश्च लोके प्रवृत्तयः ।
निन्दां चैव प्रशंसां च यो नाश्रयति मुच्यते ॥ २१
मैत्रोऽथ शीलसंपन्नः सुसहायपरश्च यः ।
मुक्तश्च विविधैः सङ्गैस्तस्य प्रेत्य महत्फलम् ॥ २२
सुवृत्तः शीलसंपन्नः प्रसन्नात्मात्मविद्बुधः ।
प्राप्येह लोके सत्कारं सुगतिं प्रतिपद्यते ॥ २३

कर्म यच्छुभमेवेह सद्भिराचरितं च यत् ।
तदेव ज्ञानयुक्तस्य मुनेर्धर्मो न हीयते ॥ २४
निष्क्रम्य वनमास्थाय ज्ञानयुक्तो जितेन्द्रियः ।
कालाकाङ्क्षी चरन्नेवं ब्रह्मभूयाय कल्पते ॥ २५
अभयं यस्य भूतेभ्यो भूतानामभयं यतः ।
तस्य देहाद्विमुक्तस्य भयं नास्ति कुतश्चन ॥ २६
अवाचिनोति कर्माणि न च संप्रचिनोति ह ।
समः सर्वेषु भूतेषु मैत्रायणगतिश्चरेत् ॥ २७

C. 12. 5952
B. 12. 160. [illegible]
K. 12. 158. [illegible]

थाप्य )लोलुपः ; D7 T G2. 5 M1 स्वल्पेच्छश्चाप्यलोलुपः ; M2 सुजल्पोथाप्यलोलुपः. — d ) K5 Dn1. n3 D2–4 कथंचन ; D7 T G2. 5 M कदाचिन्न ( for कदाचन ). K5 D8 कथंचन स पूर्यते.

20 G1 om. 20 ; V1 om. 20ab ( for both, cf. v. l. 19 ). — a ) K4 D1 समस्त्वं ; B1 ( twice ). 2. 4. 5 Da D4. 7 T G2. 5 M4 मयि त्वं ( for मम त्वं ). — b ) K5 Dn3 D2. 3. 5. 8 मयि तेषु तथा( D5 °वा )प्यहं. — c ) Ś1 K4 D1. 4 पूर्वसंबंध- ; D7 सर्वसंबंधि- ( for पूर्व° ). K5 V1 B3. 4 Dn1. n3 D2. 3. 5. 7. 8 T G2. 5 M1. 2. 4 -संयोगं ; B1 -साम्न्याहं ( sic ) ; B2 -योगं च ( for -संयोगान् ). — d ) Da शनैर् ; D4 नैनान् ; T1 G5 M1–3 न तद् ; M4 न तु ( for नैतद् ). D1 निषेव्यते ( for °वते ).

21 a ) D7 T1 G5 सर्व- ( for सर्वा ). B2 सर्वाश्रमास् ( for सर्वा ग्राम्यास् ). — b ) M2 लोक- ( for लोके ). D1 corrupt. — c ) D4 प्रशंसाश्च ( for °सां ). — d ) T2 ये ( for यो ). Bo. 3–5 न श्रयति ; B1 न सेवेत्स ; B2 Da न सेवति ; D7 S ( G3. 4 absent ) न सेवेत ( for नाश्रयति ).

22 V1 reads 22 on marg. B4 partly damaged. — a ) K4 [ऽ]सि ; B1. 2 Da हि ; D4. 9 [ऽ]ति- ( for ऽथ ). — b ) T1 G2. 5 सुसहायश्च ( for सुसहाय- ). T G2. 5 M चरश्च ( for -परश्च ). K5 Dn1. n3 D2. 3. 5. 8 प्रसन्नात्मात्मविच्च ( D5 °त्तु ) यः ; Da1 स्वसहायोपरिक्षयः ; Da2 स्वसहायै यो हरिपरिक्षश्चरंश्च यः ( sic ). — D5 om. 22c–23b. — c ) K5 B1. 2. 4 Dn3 D2. 3. 8 मुक्तस्य ; T2 मुक्ताश्च ; M1 मुक्तं च ; M2 मुक्त* ( for मुक्तश्च ). K4 रागैस् ( for सङ्गैस् ). — d ) K5 Dn1. n3 D2–4. 8 T2 G1 फलं महत् ( by transp. ) ; B1 Da महाफलं.

23 = ( var. ) B. 12. 220. 12c–13b. D5 om. 23ab ( cf. v. l. 22 ). — a ) Da2 सुव्रतः ; D1 सुवृत्ता ; D4 सुवृत्त- ; T1 G2. 5 सद्वृत्तः ( for सुवृत्तः ). D7 सद्वृत्तं शीलसंपन्नं. — b ) Bo. 3–5 च यः ( for बुधः ). — c ) = 31c. D7 प्राप्येव ; G2 प्राप्यैव ( for °प्येह ). D2. 5 लोक- ( for लोके ). M1. 3 संस्कारं ( for सत्कारं ). — d ) B1 D5 स्वर्गं समभिपद्यते.

24 B4 partly damaged. — a ) K5 D2. 3. 8 यः ( for यच् ). B3. 4 शुभदं च ( for °मेव ). D5 कर्मजं शुभजं चेह. — b ) Dn3 चरेत् ( for च यत् ). — d ) K5 V1 Bo. 2. 3. 5 Dn1. n3 D2–4. 8 T2 G1. 2 M1–3 वर्त्म न ; D5 वेश्म न ; D7 T1 G5 M4 वर्त्मनि ( for धर्मो न ). V1 B ( B4 damaged ) Da विधीयते ( for न हीयते ). K4 मुनिधर्मान्न हीयते.

25 a ) D5 बलम् ( for वनम् ). — c ) T1 G2. 5 कालकांक्षी ( for कालाकाङ्क्षी ). Dn1. n3 D2. 3. 8 चरत्येवं ; D5 T1 G5 M1–3 चरन्नेव ; T2 वने चैवं ; G2 चरन्नेह ( for °न्नेवं ). G1 कालाकांक्षितवानेवं.

26 With 26, cf. B. 12. 192. 4. 26ab = ( var. ) B. 12. 220. 15ab. — a ) D7 T1 G5 सर्व- ( for यस्य ). D1 भूतस्य ( for भूतेभ्यो ). — b ) B5 D5 चाभयं ( for अभयं ). B1 च यत् ; T G2. 5 कृतः ( for यतः ). — 26cd = Manu. 6. 40cd. — B1 om. ( hapl. ) 26d–29a. — d ) V1 B2 Da D7. 9 T1 G2. 5 M कथंचन ( for कुतश्चन ). D4 भयं नेहास्ति किंचन.

27 B1 om. 27 ( cf. v. l. 26 ). — a ) D4 T1 G2. 5 M3. 4 अपाचिनोति ; M2 अवाचीनोपि ( sic ) ( for अवाचिनोति ). D5 धर्माणि ( for क° ). — b ) D2. 3 नरः ( for न च ). Ś1 K2. 4 D1 हि ; K3 Bo. 3–5 D5 च ( for ह ). — c ) K1 स च ; D7 T1 G2. 5 ततः ( for समः ). — d ) = 3. 203. 45b ; B. 12. 189. 13b ; 278. 5b ; 329. 18b. V1 B5 ( marg. ) Da M3. 4 -गवश्च ; Bo. 5 -गतं ; D5. 7 T1 G2. 5 -गतिं ; T2 -गतींश्च ; M1

C. 12. 5953
B. 12. 160. 28
K. 12. 158. 28

शकुनीनामिवाकाशे जले वारिचरस्य वा ।
यथा गतिर्न दृश्येत तथा तस्य न संशयः ॥ २८
गृहानुत्सृज्य यो राजन्मोक्षमेवाभिपद्यते ।
लोकास्तेजोमयास्तस्य कल्पन्ते शाश्वतीः समाः ॥ २९
संन्यस्य सर्वकर्माणि संन्यस्य विधिवत्तपः ।
संन्यस्य विविधा विद्याः सर्वं संन्यस्य चैव ह ॥ ३०
कामेषु चाप्यनावृत्तः प्रसन्नात्मात्मविच्छुचिः ।
प्राप्येह लोके सत्कारं स्वर्गं समभिपद्यते ॥ ३१
यच्च पैतामहं स्थानं ब्रह्मराशिसमुद्भवम् ।
गुहायां पिहितं नित्यं तद्दमेनाभिपद्यते ॥ ३२
ज्ञानारामस्य बुद्धस्य सर्वभूताविरोधिनः ।
नावृत्तिभयमस्तीह परलोके भयं कुतः ॥ ३३
एक एव दमे दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ ३४
एतस्य तु महाप्राज्ञ दोषस्य सुमहान्गुणः ।
क्षमायां विपुला लोकाः सुलभा हि सहिष्णुना ॥ ३५

---

-शतश् (for -गतिश्). G1 M2 मैत्राय गणतश्चरेत्.

28 With 28, cf. B. 12. 181. 19; 322. 19. B1 om. 28 (cf. v. l. 26). — a) K1 B2.3 Da D5 शकुनानाम् (for °नीनाम्). Da2 इवाकाश- (for °शे). — b) K5 B2 Da2 Dn1. n3 D2.3.8.9 च (for वा). Da1 जले वा चरितस्य च; D7 S (G3.4 absent) मत्स्यानामिव चोदके. — c) Da1 दृश्येते; D1 पश्येत (for दृश्येत).

29 With 29, cf. Manu. 6. 39. B1 om. 29abc (cf. v. l. 26). — a) D5 गृहम् (for गृहान्). Bo M4 यथा( M4 महा )नुत्सृज्य (for गृहानु°). T2 G1 राजा (for राजन्). — b) T2 G1 [अ]नुपद्यते (for [अ]भि°). — d) K1 Da1 M1-3 कल्पांते; V1 B2 D7 T1 G1.5 कल्प्यंते (for कल्पन्ते). V1 B1 Da शाश्वतास्; D4 बहुलाः (for शाश्वतीः). V1 B1.2 Da तथा (for समाः).

30 a) D1 सत्यस्य; M1.3 सर्वस्य (for संन्यस्य). — b) Dn3 T2 G2 स न्यस्य (for संन्यस्य). B4 D4.9 विविधं; D7 S (G3.4 absent) विपुलं (for विधिवत्). B1.2 Da यथावद्भरतर्षभ. — c) Dn3 T2 G2 M1.4 स न्यस्य (for संन्यस्य). M2 विपुला (for विविधा). M3 नित्याः (for विद्याः). — d) D4 सर्वे. Dn3 D9 T2 G2 M1.4 स न्यस्य (for संन्यस्य). D1.4.7 T G2.5 हि (for ह).

31 a) M2 om. from वृत्तः up to पिहितं (in 32c). K5 V1 B D (except D9; Dn2 D6 absent) T G1.2.5 M1.3.4 कामे शुचि( B4 काले शुचि- ; Da2 कामेषुचि )रनावृत्तः ( B5 °घृण्यः ). — b) D7 G2 M1.3.4 प्रशांतात्मा (for प्रसन्नात्मा). Da [अ]र्थविच्छुचिः; D5 च नेच्छति (for [आ]त्मविच्छुचिः). — c) G2 प्राप्यैव. K1 लोकं (for लोके). — d) K1 D4.9 सर्वं (for स्वर्गं). V1 समभिविंदते; Da संप्रतिपद्यते; D7 T G1.2.5 M1.3.4 समधि( T2 G1 °भि )गच्छति (for °भिपद्यते).

32 M2 om. up to पिहितं (cf. v. l. 31). — a) K1 यश्च; G1 यं च (for यच्च). B2 पैतामह- (for °हं). — b) Bo.3-5 धर्म- (for ब्रह्म-). — c) V1 B (except B4) Da D5.7 T G1.5 M1.3.4 निहितं; G2 निश्रितं (for पिहितं). M2 नित्यस् (for नित्यं). — d) T2 M3 तं (for तद्). K1.3.5 B1 Da D4.8.9 S (G3.4 absent) [अ]धिगम्यते; V1 B2-4 Dn1. n3 D2.3.5.7 [अ]भिगम्यते (for °पद्यते).

33 a) D4 ज्ञानागमस्य; D5 °गमाभि-; D7 T2 G1 ज्ञानाद्दांतस्य (for ज्ञानारामस्य). Bo.3.5 D1 वृद्धस्य (for बुद्धस्य). — b) V1 Da D7 S (G3.4 absent) सर्वभूतानुरोधिनः. — Da2 om. 33c-34b. — c) T2 नावृत्तिर्. — d) K1.3.5 V1 B Da1 Dn1. n3 D1-3.5.8.9 M परलोक- (for °लोके).

34 Da2 om. 34ab (cf. v. l. 33). — b) T2 G1 M1-3 नोपलभ्यते (for °पद्यते). — c) G2 यदैनं. D7 S (G3.4 absent) दमसं( M2 दयया )युक्तम् (for क्षमया युक्तम्). — d) D1 अशक्यं (for °क्तं). K3 जगत्; D7 जनाः (for जनः).

35 B4 partly damaged. — a) K5 Bo.2-5 Dn1 D2.3.8 एकोस्य; V1 B1 Da एकः स; D5 एकस्य (for एतस्य). D4 च (for तु). K4.5 Dn1. n3 D2.3.8 सुमहाप्राज्ञ; V1 B1-3 Da तु महाराज; B4 सुमहत्प्रज्ञ (for तु महाप्राज्ञ). — b) K5 V1 B2-5 Dn1. n3 D2.3.5.8 दोषः स्यात् (for दोषस्य). V1 B4 -सुमहा- (for °हान्). B1 दोषस्यास्य महान्गुणः. — c) K5 V1 B Da Dn1. n3 D2-5.8 T2 G1 M1-3 क्षमया; D7 T1 G2.5 M4 क्षमाया (for क्षमायां). K3 D4 विमला; D9 विपुलो; T2 G1 विविधा (for विपुला). — d) Bo.3 D5 सुलभासु-; D7 S (G3.4 absent) दुर्लभा हि ( M4 °भाति- ) (for सुलभा हि). B1 ये (for हि). K4 Bo.2 Da Dn3

दान्तस्य किमरण्येन तथादान्तस्य भारत ।
यत्रैव हि वसेद्दान्तस्तदरण्यं स आश्रमः ॥ ३६
वैशंपायन उवाच ।
एतद्भीष्मस्य वचनं श्रुत्वा राजा युधिष्ठिरः ।
अमृतेनेव संतृप्तः प्रहृष्टः समपद्यत ॥ ३७
पुनश्च परिपप्रच्छ भीष्मं धर्मभृतां वरम् ।
तपः प्रति स चोवाच तस्मै सर्वं कुरूद्वह ॥ ३८

इति श्रीमहाभारते शान्तिपर्वणि चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

## १५५

भीष्म उवाच ।
सर्वमेतत्तपोमूलं कवयः परिचक्षते ।
न ह्यतप्ततपा मूढः क्रियाफलमवाप्यते ॥ १
प्रजापतिरिदं सर्वं तपसैवासृजत्प्रभुः ।
तथैव वेदानृषयस्तपसा प्रतिपेदिरे ॥ २
तपसो ह्यानुपूर्व्येण फलमूलानिलाशनाः ।

C. 12. 5966
B. 12. 161. 3
K. 12. 159. 3

D1–3. 5. 7. 8 T1. 2 ( *sup. lin.* as in text ) G2. 5 M1–3 सहिष्णुता ( for °ष्णुना ).

36 B4 partly damaged. —[a] ) D4 कांतस्य ( for दान्तस्य ). —[b] ) T2 G1 सदा ( for तथा ). K2. 4 D1 [अ]शांतस्य ( for [अ]दान्तस्य ). G2 चैव हि ( for भारत ). D4 तथायत्नस्य चाश्रमे. —[c] ) D5 यत्र वै; M3 यत्रैवं ( for यत्रैव ). K3. 5 B0. 3–5 Dn1. n3 D2. 3. 5. 7–9 S ( G3. 4 absent ) निवसेद्; V1 B1. 2 Da वसते; D4 विंदते ( for हि वसेद् ). D1 यत्रैव हि मदो मोह्यं ( sic ). —[d] ) K2 G2 तदारण्यं ( for तदरण्यं ). K1 समाश्रयः; K3. 5 B5 Da Dn1. n3 D2–4. 7–9 S ( G3. 4 absent ) स चाश्रमः ( for स आ° ).

37 M2 om. the ref. —[a] ) D4 om. ( hapl. ) from स up to भीष्मं ( in 38[b] ). — V1 reads from 37[b] up to 12. 155. 1[a] on marg. —[b] ) M2 राज्ञा ( for राजा ). —[c] ) K3. 5 B4 Dn1. n3 D1–3. 5. 8 T G1. 2. 5 [ए]व; B1 च ( for [इ]व ). —[d] ) K2. 4 समपद्यते.

38 B4 damaged. D4 om. up to भीष्मं ( cf. v. l. 37 ). V1 reads 38 on marg. —[c] ) K5 B3 Dn3 D2–4. 8 ततः प्रीतः; Dn1 D7 G1 M ततः प्रति ( sic ) ( for तपः प्रति ). M वचोवोचत् ( M1 °वाचत् ) ( for स चोवाच ). —[d] ) D9 सर्वं तस्मै ( by transp. ). B1 तस्मिन्; T2 G1 तदा ( for तस्मै ). M1. 3 वर्षं ( for सर्वं ). K3–5 V1 B Da Dn1. n3 D2. 3. 5. 8 M1. 3 कुरूद्वहः.

Colophon. V1 reads the colophon on marg. — *Sub-parvan* : Ś1 K B1 Da Dn1. n3 D1–5. 9 आपद्धर्म; V1 B4 D7 S ( G3. 4 absent ) राजधर्म. — *Adhy. name* : Ś1 K V1 B0. 3. 5 Da Dn1. n3 D2. 3. 5 दमाध्यायः; D4 दमप्रशंसा; M1–3 दमस्तुतिः. — *Adhy. no.* ( figures, words or both ) : B1 149; B2 T1 G5 159; B3 T2 G1. 2 158; B4 157; Da1 28; Dn1. n3 30; D8 24; M 160. — *Śloka no.* : Da Dn3 D8 38; Dn1 37.

### 155

1 V1 reads 1[a] with the ref. on marg. —[a] ) K3 D9 एव ( for एतत् ). —[b] ) B2 Da मुनयः ( for कवयः ). D7 S ( G3. 4 absent ) मुनयः संप्रचक्षते. —[c] ) B1 D7 न ह्यतप्ततपो; T1 G5 नासुतप्ततपा; G1 नाभ्य-तप्त°; G2 नानु° ( for न ह्य° ). D4 न दानतपसा हीनः. —[d] ) D4 क्वचित्सुखम् ( for क्रियाफलम् ). V1 B1. 2 Da T2 G1 M उपाश्नुते; B0. 3–5 D5 अवाप्स्यति ( D5 °सि ); D7 T1 G2. 5 उपेयिवान् ( for अवाप्यते ).

2 = ( var. ) Manu. 11. 243. —[c] ) Da D5. 7 T1 G2. 5 M1. 3 देवा ( for वेदान् ). —[d] ) K5 reads from पेदिरे up to पितामह ( in 12. 156. 1[d] ) on marg.

3 With 3, cf. Manu. 11. 236. K5 reads 3 on marg. B4 partly damaged. —[a] ) K3 B3 Da G2 तपसा; D1 तपस्यो ( for °सो ). K1. 4 V1 Da1 D9 T G1 M1 ह्या( V1 ह्य )नुपूर्वेण; B0. 5 G5 ह्यनुरूपेण ( for

C. 12. 5966
B. 12. 161. 3
K. 12. 159. 3

त्रींल्लोकांस्तपसा सिद्धाः पश्यन्ति सुसमाहिताः ॥ ३
औषधान्यगदादीनि तिस्रो विद्याश्च संस्कृताः ।
तपसैव हि सिध्यन्ति तपो मूलं हि साधनम् ॥ ४
यद्दुरापं दुराम्नायं दुराधर्षं दुरुत्सहम् ।
सर्वं तत्तपसा शक्यं तपो हि दुरतिक्रमम् ॥ ५
सुरापोऽसंमतादायी भ्रूणहा गुरुतल्पगः ।
तपसैव सुतप्तेन नरः पापाद्विमुच्यते ॥ ६
तपसो बहुरूपस्य तैस्तैर्द्वारैः प्रवर्ततः ।
निवृत्त्या वर्तमानस्य तपो नानशनात्परम् ॥ ७
अहिंसा सत्यवचनं दानमिन्द्रियनिग्रहः ।
एतेभ्यो हि महाराज तपो नानशनात्परम् ॥ ८
न दुष्करतरं दानान्नातिमातरमाश्रमः ।
त्रैविद्येभ्यः परं नास्ति संन्यासः परमं तपः ॥ ९
इन्द्रियाणीह रक्षन्ति धनधान्याभिगुप्तये ।
तस्मादर्थे च धर्मे च तपो नानशनात्परम् ॥ १०
ऋषयः पितरो देवा मनुष्या मृगसत्तमाः ।

---

ह्यानुपूर्व्येण). K5 Dn1. n3 D2-4. 8 तपसैव ससर्जाहं (D4 °र्जुश्च). — b) Ś1 K2 D5. 7 T1 G2. 5 फलमूलानिलाशिनः (Ś1 K2 °शनः; G2 °शिनां); K5 Dn1. n3 D2-4. 8 फलमूलानि यानि च; Da1 फलमूपानिलासनः (sic). — D5 om. 3c-4b. — c) K1 D3 लोकास् (for लोकांस्). B1 सिद्धिः (for सिद्धाः). D4 वीरलोकांश्च तपसा. — d) K4 पश्यंत.

4 With 4, cf. Manu. 11. 237. K2. 4 D5 om. 4ab (for D5, cf. v. l. 3). K5 reads 4 on marg. — a) Ś1 D1 अगदानीति; T2 एतदादीनि (for अग°). — b) Ś1 B4 D1 सुसंस्कृताः; B5 च संभृताः (for च संस्कृताः). K5 Dn1. n3 D2. 3. 8 क्रियाश्च विविधास्तथा; D4 क्रियाश्च बहुविस्तराः. — c) B2 Da D7 T1 G5 M1. 3. 4 [हृ]ह; M2 न (for हि). B1. 2 Da साध्यंते; D7 S (G3. 4 absent) सिध्यंते (for सिध्यन्ति). — d) D7 S (G3. 4 absent) च (for हि).

5 With 5, cf. Manu. 11. 238. K5 reads 5 on marg. B4 partly damaged. — a) K3 D9 M2 दुरास्मायं; K5 Dn3 D2. 3. 8 भवेत्किंचित्; B0. 3. 4. 5 (marg.) दुरासादं; D4 °स्मानं; D5 °साद्यं (for °म्नायं). ❀ Ca: दुराम्नायं दुरभ्यासम् । ❀ — b) K1 दुराधर्मं (for °धर्षं). K5 Dn3 D2. 3. 8 तत्सर्वं तपसो भवेत्. — c) V1 B (B4 damaged) Da Dn1 D5. 7 S (G3. 4 absent) तत्सर्वं (by transp.). D4 साध्यं (for शक्यं). K5 Dn3 D2. 3. 8 ऐश्वर्यमृषयः प्राप्तास्. — d) K5 Dn3 D2. 3. 8 तपसैव न संशयः.

6 D9 om. 6. K5 reads 6 on marg. — a) V1 B (except B3) Da D5 रुक्महारी च; Dn1 स्वर्णहारी च; G2 [ऽ]समतादायी (for ऽसंमता°). G1 सुरापेसंमतादायि. — b) B0. 2. 4. 5 (marg. as in text) ब्रह्महा; D5 ब्रह्मघ्नो (for भ्रूणहा). — With 6cd, cf. Manu. 11. 239cd. — d) K5 B0. 3. 5 Dn3 D7 T G2. 5 प्रमुच्यते; G1 lacuna (for विमु°). V1 B1. 2 मुच्यते सर्वकिल्बिषैः; Da Dn1 मुच्यंते सर्वकिल्बिषात्.

7 K5 reads 7 on marg. — a) M2 तपसा. Dn3 बहुमूलस्य (for °रूपस्य). — b) K2 D5 M2 प्रवर्तते (K2 °त); V1 B2 प्रपद्यतः; B1 प्रपद्यते; Da2 प्रयत्नतः; D7 T1 G2. 5 M4 प्रवर्तितः; T2 G1 निवर्ति(T2 °र्तं)तः (for प्रवर्ततः). ❀ Ca: द्वारैः उपायैः । ❀

8 D4. 5. 7. 8 om. (hapl.) 8. K5 reads 8 on marg. — b) T2 ·निग्रहं (for °हः). — c) V1 G1 [ऽ]पि (for हि).

9 Ś1 K1. 2. 4 D1 om. (hapl.) 9-10. T2 G1 read 9-10 after 12ab. K5 reads 9 on marg. — a) D9 दुष्करकरं (for °तरं). T2 G1 M1 सुदुष्करतरं (G1 °मं) दानं. — b) D5 आश्रयः (for आश्रमः). K3. 5 V1 B1-4 Da Dn1. n3 (marg.) D2. 4. 8 Cnp नास्ति दानसमा गतिः; Dn3 (orig.) नास्तिमातररश्मयः; D9 नातिमात्रमनाश्रमः. — d) D7 T1 G2. 5 M1. 3 संन्यासात्; T2 G1 संन्यस्यात् (for संन्यासः). D7 T1 G2. 5 नापरं (for परमं). M2. 4 न संन्यासात्परं तपः.

10 For the sequence in T2 G1, cf. v. l. 9. Ś1 K1. 2. 4 D1 om. 10 (cf. v. l. 9). K5 reads 10 on marg. — a) D5 च (for [हृ]ह). B0. 5 D5 रक्ष्यंते; Dn1. n3 रक्ष्यंति (for रक्षन्ति). — b) K5 Dn1. n3 D2. 8 स्वर्ग(Dn3 सर्वं-; D2. 8 वरं)धर्माभिगुप्तये; V1 D7 T1 G2. 5 विप्रर्षिपितृदेवताः; B0 Da2 धनधान्यानि गुप्तये; D9 धनैर्धान्याधिगुप्तये; M2 धनधान्या हि गुप्तये (sic). — c) T2 धर्मेण (for धर्मे च). B D5 धर्मे चार्थे च कामे च; Da1 धर्मादर्थश्च कामश्च.

11 K5 reads 11 on marg. B4 damaged. — b)

यानि चान्यानि भूतानि स्थावराणि चराणि च ॥ ११
तपःपरायणाः सर्वे सिध्यन्ति तपसा च ते ।
इत्येवं तपसा देवा महत्त्वं चाप्यवाप्नुवन् ॥ १२
इमानीष्टविभागानि फलानि तपसा सदा ।
तपसा शक्यते प्राप्तुं देवत्वमपि निश्चयात् ॥ १३

इति श्रीमहाभारते शान्तिपर्वणि पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥

## १५६

युधिष्ठिर उवाच ।
सत्यं धर्मे प्रशंसन्ति विप्रर्षिपितृदेवताः ।
सत्यमिच्छाम्यहं श्रोतुं तन्मे ब्रूहि पितामह ॥ १
सत्यं किंलक्षणं राजन्कथं वा तदवाप्यते ।
सत्यं प्राप्य भवेत्किं च कथं चैव तदुच्यते ॥ २
भीष्म उवाच ।
चातुर्वर्ण्यस्य धर्माणां संकरो न प्रशस्यते ।
अविकारितमं सत्यं सर्ववर्णेषु भारत ॥ ३

C. 12. 5979
B. 12. 162. 3
K. 12. 160. 3

---

K3. 5 Dn1. n3 D2–5. 8. 9 मृगपक्षिणः ( for °सत्तमाः ). V1 B1. 2 Da D7 S (G3. 4 absent) मानुषाः (T2 G1 मनुष्याः; G2 मानवाः) पशुपक्षिणः. — d) G1 मनुष्याः स्थावराणि च. — For 11cd, Bo. 3. 5 subst.:

403 * स्थावराणि च भूतानि चराण्यन्यानि यानि च ।

12 B5 om. 12ab. K5 reads 12 on marg. — a) Ś1 K4 D1 भूपाः (for तपः-). — b) Bo. 3. 4 सिध्यंते. — After 12ab, T2 G1 read 9–10. With 12cd, cf. Manu. 11. 244ab. — c) B1 इत्येव (for °वं). M4 तपसो (for °सा). — d) K5 Dn1. n3 D2. 3. 8 प्रतिपेदिरे; Da2 G1 M2 चाप्यवाप्नुवान् (M2 °यात्) (for °वन्).

13 K5 reads 13 on marg. — a) V1 B1. 2 Da D7 S (G3. 4 absent) एवम् (for इमानि). K3 (*sup. lin.*) इमानिष्टवियोगानि (sic). ❀ Cn: इमानि नक्षत्रादीनि । सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि इति श्रुतेः । ❀ — b) K2. 3. 5 V1 B Da1 Dn1. n3 D1–3. 5. 8. 9 तपसः; T2 G1 M2 तपसां (for तपसा). T2 G1 तदा; G2 यदा (for सदा). Da2 corrupt. — d) D7. 9 T1 G2. 5 इति (for अपि). K1. 2 G1 निश्चयं; K4 D1. 9 निश्चितं; D7 T1 G2. 5 M1. 3 निश्चयः (for निश्चयात्).

Colophon om. in B3; damaged in B4; K5 on marg.; Dn2 D6 G3. 4 absent. — *Sub-parvan:* Ś1 K V1 B1 Da D1–5. 9 आपद्धर्म; Bo. 5 D7 T2 G1 M राजधर्म. — *Adhy. name:* Ś1 K1. 2 V1 Bo–2. 5 Da2 D1–3. 5 तपोध्यायः; K3 D4 तपःप्रशंसा; K5 तपसोध्यायः; Da1 तपोदानं; M1–3 तपःस्तुतिः. — *Adhy. no.* (figures, words or both): B1 140; B2 T1 G5 160; Da1 29; Dn1 31; D8 25; T2 G1. 2 159; M 161. — *Śloka no.:* Da Dn3 13; Dn1 15; D8 12.

### 156

1 K5 reads 1 on marg. — a) G2 सर्वं (for सत्यं). K5 Bo. 5 Dn1. n3 D2–4. 7. 8 धर्मं; V1 B1. 2. 4 Da D9 T1 G1. 2. 5 M सर्वे; T2 एव (for धर्मे). T2 प्रशंसंते. — b) B4 विप्रर्षे; D4 °र्षिम् (for °र्षि-). D4 इव (for -पितृ-). — c) D7 T1 G2. 5 M1. 3. 4 ज्ञातुं (for श्रोतुं). — d) T2 G1 वद (for ब्रूहि).

2 a) T2 G1 तात (for राजन्). — b) V1 B1. 2 च; B4 स; Da -चित्; D5 तु (for वा). — D4 om. 2c–3b. — c) D7 T1 G5 M चापि; T2 G1 चैव; G2 वापि (for प्राप्य). K1 प्रत्याभवेत् (for प्राप्य भ°). V1 Bo. 1 Da D1. 9 किंचित्; D7 T G1. 2. 5 किंस्वित् (for किं च). — d) T2 M4 [ए]तद् (for तद्). K5 V1 B1 Da Dn1. n3 D2. 3. 5. 7. 8 T1 G2. 5 उच्यतां (for °ते). M2 कथं चैतदवाप्यते.

3 D4 om. 3ab (cf. v. l. 2). — a) D1. 7 T2 M4 च( D7 T2 चा )तुर्वर्णस्य. — b) B1. 3. 4 शंकरो (for सं°). M4 नः (for न). V1 B1 Da प्रदृश्यते; T2 प्रपश्यते (for प्रशस्यते). — c) Ś1 K2. 4 D1 भवेत्; D5 मतं

C. 12. 5980
B. 12. 162. 4
K. 12. 160. 4

सत्यं सत्सु सदा धर्मः सत्यं धर्मः सनातनः ।
सत्यमेव नमस्येत सत्यं हि परमा गतिः ॥ ४
सत्यं धर्मस्तपो योगः सत्यं ब्रह्म सनातनम् ।
सत्यं यज्ञः परः प्रोक्तः सत्ये सर्वं प्रतिष्ठितम् ॥ ५
आचारानिह सत्यस्य यथावदनुपूर्वशः ।
लक्षणं च प्रवक्ष्यामि सत्यस्येह यथाक्रमम् ॥ ६
प्राप्यते ह यथा सत्यं तच्च श्रोतुं त्वमर्हसि ।
सत्यं त्रयोदशविधं सर्वलोकेषु भारत ॥ ७

सत्यं च समता चैव दमश्चैव न संशयः ।
अमात्सर्यं क्षमा चैव ह्रीस्तितिक्षानसूयता ॥ ८
त्यागो ध्यानमथार्यत्वं धृतिश्च सततं स्थिरा ।
अहिंसा चैव राजेन्द्र सत्याकारास्त्रयोदश ॥ ९
सत्यं नामाव्ययं नित्यमविकारि तथैव च ।
सर्वधर्माविरुद्धं च योगेनैतदवाप्यते ॥ १०
आत्मनीष्टे तथानिष्टे रिपौ च समता तथा ।
इच्छाद्वेषक्षयं प्राप्य कामक्रोधक्षयं तथा ॥ ११

---

(for ·तमं). D7 T G1. 2. 5 M1. 3. 4 धर्मः (G1 °र्मे·) साधारणः (D7 °णं; G1 °णैः) सत्यं; M2 धर्मेषु विहितं सत्यं. — After 3, M3 ins.:

404* तस्माच्छ्रेष्ठतमं सत्यं सर्ववर्णेषु भारत ।

4 a) T2 तथा (for सदा). Da2 धर्मे (for धर्मः). — b) D1 धर्माः. — c) K1 नमस्येव; K2 D1 °स्ये तं; K3 °स्येह; B4 न नश्येत; D4 नमस्यंति; M1 न मंस्येत (for नमस्येत). — d) M4 om. हि. K3 परमां. T2 G1 सत्यमेव परा गतिः.

5 a) V1 B1. 2. 4 Da D3. 5. 7 S (G3. 4 absent) मोक्षस् (for धर्मस्). D4 परो (for तपो). K1 योगं. — b) K1 धर्म· (for ब्रह्म). — D1 om. (hapl.) 5cd. — c) G2 यज्ञं (for यज्ञः)· K1 V1 B0–2. 5 Da D7 T G1. 2. 5 M3. 4 परं प्रोक्तं (K1 B5 G1 °क्तः); M2 ततस्तस्य (for परः प्रोक्तः). — M1–3 om. 5d–6a. — d) K4. 5 Dn1. n3 D2–5. 8 सर्वं सत्ये (by transp.); B0 G2 सत्ये धर्मं; B3 Da1 सत्यं सर्वं (Da1 °र्वे).

6 M1–3 om. 6a (cf. v. l. 5). M4 om. 6ab. — a) B0. 2. 5 D4 आकारानिह; D7 T1 G2. 5 रूपं यदिह; D9 आचारादिह; T2 G1 नैरुक्तमिह (for आचारानिह). Ś1 (orig. as in text) K1. 2 संन्यस्य; V1 Da D9 सर्वस्य (for सत्यस्य). D1 आचाराणि हि मर्त्यस्य. — b) B1 यथावेदानु· (for °वदनु). — c) T2 चैव; G1 चेह (for च प्र·). — d) K4 [ए]व; G1 च (for [इ]ह). D7 T1 G2. 5 पराक्रमं (for यथा°).

7 a) K5 reads from प्राप्यते up to सर्वलो (in 7d) on marg. K3. 5 V1 B Da Dn1. n3 D2–5. 7–9 S (G3. 4 absent) च; D1 lacuna (for ह). — b) Da त्वं (for च). B2 Da D7 S (G3. 4 absent) वेत्तुं (for श्रोतुं). K5 B2 Dn1. n3 D2–4. 8 इह (for त्वम्). D5 तच्च त्वं श्रोतुमर्हसि. — Before 7cd, Da ins. भीष्म उवाच. — d) D9 सर्वं; M2 प्रोक्तं (for सर्व·). K3 ·भूतेषु (for ·लोकेषु).

8 a) M1. 3. 4 सर्वत्र (for सत्यं च). K3 समतां; B1 महता (for समता). M2 सत्यं सर्वत्र समता. — b) K3 D4 समौ न द्वे (for दमश्चैव). — c) K4 M4 अमात्सर्यं; G2 अस्मात्सत्यं (for अमात्सर्यं). — d) D9 [अ]नुसूयता.

9 a) K3 B5 Da T2 G1 योगो; B1. 2. 3 (marg. as in text) D5 योग·; D4 यशो (for त्यागो). D1 दानम् (for ध्या°). D5 अथार्जत्वं; T2 च धैर्यं च; G1 च धार्यत्वं; M1. 3 अथाध्यत्वं (for अथार्यत्वं). — b) Da1 सततां. K5 Da Dn1. n3 D2–4. 8 दया (for स्थिरा). — c) D9 चेति (for चैव). Da D7 T G1. 2. 5 M1. 3. 4 सत्यं च (for राजेन्द्र). M2 अहिंसा सत्यमेवेह. — d) D4 सत्यरूपास्; M2 सत्याकारस् (for °कारास्). D9 त्रयोदशी (for °श).

10 a) K3 D9 [आ]श्रयो (for [अ]व्ययं). Da चैव (for नित्यम्). — b) K5 D2. 3. 8 अविकारस्; M2 अविकारी (for °कारि). — c) K5 सर्वधर्माविरुद्धश्च; B2 Da °रोधं च; Dn1. n3 D2. 3. 8 °रुद्धेन; T2 सर्वकर्माविरुद्धं च. — d) Dn3 D1 तद् (for [ए]तद्). G2 योगेनैव तदाप्यते.

11 a) K3 आत्माभीष्टे; B1 Da Dn3 D5 T2 G1 M2 आत्मनिष्टे (for आत्मनीष्टे). K1 तथारिष्टे; T2 G1 तदानिष्टे; M2 तथानिष्ट· (for तथानिष्टे). — b) T2 तु (for च). K4 ममता; D1 समतां; G1 समा* (for समता). K3 मता; D7 T G1. 2. 5 तु या (for तथा). — M2 om. (hapl.) 11cd. — c) K4. 5 Dn1. n3 D2. 5. 8 ·द्वेषं; Da1 ·द्वेष्य· (for ·द्वेष·). D7 T1 G2. 5 ·क्षये (for ·क्षयं). Ś1 (*sup. lin.* as in text) K2. 4 D1 नास्ति; T G1. 5 प्राप्या; G2 प्राप्त्या (for प्राप्य). — d) D7 T G1. 2. 5 ·क्षये (T2 G1 °या) च सा (for ·क्षयं तथा).

दमो नान्यस्पृहा नित्यं धैर्यं गाम्भीर्यमेव च ।
अभयं क्रोधशमनं ज्ञानेनैतदवाप्यते ॥ १२
अमात्सर्यं बुधाः प्राहुर्दानं धर्मे च संयमम् ।
अवस्थितेन नित्यं च सत्येनामत्सरी भवेत् ॥ १३
अक्षमायाः क्षमायाश्च प्रियाणीहाप्रियाणि च ।
क्षमते सर्वतः साधुः साध्वाप्नोति च सत्यवान् ॥ १४
कल्याणं कुरुते गाढं ह्रीमान्न श्लाघते क्वचित् ।
प्रशान्तवाङ्मना नित्यं ह्रीस्तु धर्मादवाप्यते ॥ १५
धर्मार्थहेतोः क्षमते तितिक्षा क्षान्तिरुच्यते ।
लोकसंग्रहणार्थं तु सा तु धैर्येण लभ्यते ॥ १६
त्यागः स्नेहस्य यस्त्यागो विषयाणां तथैव च ।
रागद्वेषप्रहीणस्य त्यागो भवति नान्यथा ॥ १७
आर्यता नाम भूतानां यः करोति प्रयत्नतः ।
शुभं कर्म निराकारो वीतरागत्वमेव च ॥ १८

C. 12. 51
B. 12. 16
K. 12. 16

12 ^a) V1 B Da दमे (for दमो). V1 B D5 नात्म( B4 °र्थे )स्पृहा; Da1 मार्थ°; Da2 नार्थ°; D4 माध्यस्थता; D7 S (G3.4 absent) नामास्पृहा (G1 °हो) (for नान्यस्पृहा). — ^b) K5 Dn1. n3 D2. 3. 8 transp. धैर्यं and गाम्भीर्यम्. B1. 2 Da स्थैर्यं (for धैर्यं). — ^c) D7 S (G3. 4 absent) अशाठ्यं (M1 °ठ्य-) (for अभयं). K5 Dn1. n3 D2. 3. 8 रोग- (for क्रोध-). B1 -समयं; D7 T1 G5 -दमनं (for -शमनं). — ^d) D5 अवाप्नुयात् (for °प्यते).

13 G1 om. (hapl.) 13–15. — ^b) K3. 5 Bo. 3–5 Dn1 D2. 3. 5. 7. 8 S (G1 om.; G3. 4 absent) दाने; K4 धानं (sic); V1 B1 Dn3 दान-; D1 मानं; D4 ध्यानं (for दानं). Bo. 4 यज्ञे; D4 धर्मं (for धर्मे). K2. 4 संशयं; K3 (*sup. lin.* as in text) संशयः; K5 Dn1. n3 D2–4. 8 M2 संयमः; B1 शंसयं; B2 संश्रयं; Da1 संश्रमं; D1 शंशयं (sic) (for संयमम्). — ^c) Bo. 3–5 D2. 3. 5. 8 अवस्थिते च (for °तेन). D5 नित्ये (for नित्यं). Dn1 अवस्थितेरनित्यं च. — ^d) D9 समेन (for सत्येन). D5 सत्ये मा मत्सरी भव.

14 G1 om. 14 (cf. v. l. 13). — ^b) D7 T1 G2. 5 हि; D9 [इ]ति (for [इ]ह). Ś1 K2 D1. 8 प्रियाणि (for [अ]प्रि°). B3 [इ]ह (for च). — ^c) Ś1 K2 D1 क्षमेत (for क्षमते). K4 lacuna; K5 Dn1. n3 D2. 3. 8 संमतः (for सर्वतः). K2 T2 साधु. — ^d) D9 स (for च). K4 साधुवान्; K5 Dn1. n3 D2. 3. 8 सत्यवाक्; V1 B1. 2 Da D5 सर्वशः (for सत्यवान्). D4 क्षमावान्विंदते सुखं; D7 T G2. 5 M ततः (M क्षमां) प्राप्नोति सत्यतां (M2 °वान्).

15 G1 om. 15 (cf. v. l. 13). B4 damaged. — ^a) K5 B3 Dn3 D2. 3. 8 बाढं; V1 B2 Da गुह्यं; B1 D7 T G2. 5 नित्यं (for गाढं). — ^b) K5 Bo. 2. 5 Dn1. n3 D2. 3. 8 धीमान्; D5 श्रीमान् (for ह्रीमान्). K5 V1 B (B4 damaged) Da Dn1. n3 D2. 3. 5. 8 ग्लायते; D7 S (G1 om.; G3. 4 absent) श्राम्यते (for श्लाघते). — ^c) K3 प्रशांता- (for °त-). K4 -वासना; D4. 9 -वाग्मता (for -वाङ्मना). B1. 2 Da प्रशांतात्मा ह्यतो नित्यं. — ^d) Bo. 5 D4. 5 च (for तु). G2 धर्मान् (for °द्).

16 ^a) Da1 धर्मार्थहेतुः (for °हेतोः). V1 M4 क्षमति; Da क्षमया; M2 क्षमतस् (for °ते). — ^b) V1 B1. 2 Da क्षां( B1. 2 शां )तिरुत्तमा; D7 S (G3. 4 absent) धर्म उत्तमः (for क्षान्तिरुच्यते). — ^c) V1 B2 Da च; Bo. 3. 5 D3. 5. 7 S (G3. 4 absent) वै; B1 वा (for तु). — ^d) K3 Da2 D7 G1. 2 साधु; D1 धर्म- (for सा तु). Ś1 K2. 4 B2 D1 धर्मेण (for धैर्येण). — After 16, D7 T G1. 2. 5 ins.:

405* अनसूया तु गाम्भीर्यं दानेनैतदवाप्यते ।

17 ^a) D7 S (G3. 4 absent) त्यक्त- (for त्यागः). K5 Bo. 3. 4 Dn1. n3 D2. 3. 5. 7. 8 यत् (for यस्). — ^b) Ś1 विषयानां. — D4 repeats 17^{cd} after 18. — ^c) D1 रागद्वेश- (for °द्वेष-). Ś1 K1. 2. 4 Dn3 D1 G2 -प्रहीनस्य (for °णस्य). — ^d) T2 G1 योगो (for त्यागो). — After 17, D7 T G1. 2. 5 ins.:

406* ध्यानं चाशाठ्यमित्युक्तं मौनेनैतदवाप्यते।

[T1 G5 तु (for च). D7 शाठ्यम् (for [अ]शा°). T2 दमेन (for मौनेन).]

18 B4 damaged. — ^a) Ś1 K1. 3. 4 D4. 9 G2 आर्यतां; B3 कार्यता; D1 आयंता (for आर्यता). V1 B1. 5 (marg.) Da अनुग्रहं च भूतानां; T2 G1 आत्मना समभूतो हि; M आत्मोपमानि भूतानि. — ^b) Bo. 2 यत् (for यः). — ^c) Bo–3. 5 Da D4 T2 G1 शुभकर्मा (D4 T2 G1 °र्म) (for शुभं कर्म). B3 om. from राकारो up to रागत्वं (in 18^d). Bo–2. 5 Da D4 निराहारो (for °कारो). — ^d) D4 एव सः; M आर्यता (for एव च). K5 Dn1. n3 D2. 3. 8 वीतरागस्तथैव च. — After 18, D4 repeats 17^{cd}.

